॥ जगत्पूज्यश्रीविजयधर्मसूरिभ्यो नमः ॥

श्रीजिनचन्द्रसूरिप्रणीतम्,

# सिद्धान्तरत्निकाऽऽख्यं व्याकरणम् ।



शान्तमूर्त्तिमुनिराजश्रीजयन्तविजयविरचित-उत्तरार्द्धवृत्तिद्वयोपरि

सिद्धान्तमुक्तानामकटिप्पणसहितम् ।

तच्च

व्याख्यातृचूडामणि—शासनदीपक—

मुनिराजश्रीविद्याविजयमहाराजेन संशोधितम् ।



वीरसं० २४५६ } द्वितीयावृत्तिः { वि० सं० १९८६

धर्मसंवत् ८ } १००० { सन् १९२९

मूल्यम् ०-१२-०

एतत्पुस्तकं भावनगरस्था-श्रीयशोविजय-जैन-ग्रन्थमालायाः कार्यवाहकेन
फूलचन्द वैद इत्यनेन वटपद्र(वडोदा)स्थ-लुहाणामित्र स्टीम प्रीन्टिंग
प्रेस इत्याख्यमुद्रणालये मुद्रापयित्वा प्राकाश्यं नीतम् ता. १-४-१९३० ॥

जगत्पूज्य स्वर्गस्थ शास्त्रविशारद जैनाचार्य श्रीमद् विजयधर्मसूरीश्वरजी महाराजके शिष्य--मुनिराज श्रीजयन्तविजयजीके शिष्य मुनिराज श्रीविशालविजयजीके उपदेशसे और खीवाणदीनिवासी शाह भीमाजी हकमाजीके प्रयत्नसे इस ग्रन्थके प्रकाशनकार्यमें सहायता देनेवाले उदार गृहस्थों की शुभ नामावली.

---

२३१—०—० खीवाणदी (मारवाड) निवासी शाह भीमाजी हकमाजी के तर्फसे, अपने पूज्य पिताजी हकमाजी कूपाजी और माताजी रकमादे के स्मरणार्थ.

१८७—८—० खीवाणदी (मारवाड) निवासी शाह शंकरलालजी कस्तूरचन्दजी की तर्फसे, अपने पूज्य पिताजी शाह कस्तूरचन्दजी हकमाजी के स्मरणार्थ.

९३-१२-० खीवाणदी (मारवाड) निवासी शाह अनूपचन्दजी गुलाबजी के तर्फसे, अपने पूज्य पिताजी शाह गुलाबजी भगवानदासजी के स्मरणार्थ.

९३-१२-० खीवाणदी (मारवाड) निवासी शाह चीमनलालजी कपूरचन्दजीकी तर्फसे, अपने पूज्य पिताजी शाह कपूरचन्दजी मकनाजी के स्मरणार्थ.

९३-१२-० खीवाणदी (मारवाड) निवासी शाह दलीचन्दजी भूताजी के तर्फसे, अपने पूज्य पिताजी शाह भूताजी तिलोकजी के स्मरणार्थ.

५०—४—० दोलपरा(मा.)निवासी शाह देवीचन्दजी लुंबाजीके तर्फसे

---

७५०—०—०

जगतपूज्य–स्वर्गस्थ–गुरुदेव–श्रीविजयधर्मसूरिः




जन्म सं० १९२४.

दीक्षा सं० १९४३.

सुरिपदम् सं० १९६४.

स्वर्गगमनम् सं० १९७८.

जगत्पूज्य-शास्त्रविशारद-जैनाचार्य-

## श्रीविजयधर्मसूरीश-

गुरुदेवानामर्घ्यम् ।

धर्मो विज्ञवरेण्यसेवितपदो
धर्मं भजे भावतः,
धर्मेणावधुतः कुबोधनिचयो
धर्माय मे स्यान्नतिः ।
धर्माच्चिन्तितकार्यपूर्त्तिरखिला
धर्मस्य तेजो महत् ,
धर्मे शासनरागधैर्यसुगुणाः
श्रीधर्म ! धर्मं दिश ॥ १ ॥

# निवेदन.



जगत्पूज्य स्वर्गस्थ गुरुदेव पूज्यपाद श्रीविजयधर्मसूरीश्वरजी महाराजना शिष्यरत्न स्वर्गस्थ श्रीमान् मुनिराज श्रीरत्नविजयजी महाराजश्रीना उपदेश अने सहानुभूतिथी आ लघु व्याकरणनी पहेली आवृत्ति, संवत् १९६९ मां विशनगर निवासी शेठ **गोकलदास उगरचंदनी** आर्थिक सहायताथी श्रीविशनगर ज्ञान-भंडार व्यवस्थापक समाज तरफथी तेना सेक्रेटरी श्रीयुत शेठ **महासुखभाई चुनीलाल** द्वारा प्रकाशित थई हती, परंतु ते आवृत्ति थोडां वर्षोमां खलास थइ गइ.

आ तरफथी आ व्याकरण कलकत्ता संस्कृत एसोशियेशननी जैन श्वेतांबर व्याकरणनी प्रथमा परीक्षामां दाखल थएल हो-वाथी, श्रीवीरतत्त्वप्रकाशकमंडल ( जैन पाठशाला ) अने बीजी पण संस्थाओना संस्कृतनुं प्राथमिक ज्ञान लेनारा विद्यार्थीओने खास अडचण पडती होवाथी; तेमज मोटी उम्मरना, व्यापारी ने व्यवसायी मनुष्योने थोडा समयमां संस्कृत भाषानुं मौलिक ज्ञान प्राप्त करवा माटे आ व्याकरण खास उपयोगी होवाथी आनी बीजी आवृत्ति छपाववानी घणी अगत्य जणातां पहेली आवृत्ति छपावनार उक्त संस्था पासे फरी छपाववानी मंजुरी मांगतां,

तेना सेक्रेटरीए घणी खुशीनी साथे मंजुरी आपवाथी, अमोए अमारा तरफथी आ व्याकरणने फरी छपाववानो निश्चय करीने आ कार्य सारी रीते संपादन करवा माटे श्रीयुत पंडित **लालचंद भगवान्दास गांधीने** सोंप्युं. तेमणे घणा उत्साहथी पूर्वार्द्ध सुधीनुं संपादन कर्युं. परंतु तेमने माथे साहित्यसेवाना कामनो बोजो घणो होवाथी आ कार्यमां घणो विलंब थतो जणायाथी, अने भणनारा विद्यार्थीओनी उपरा उपरी मांगणी आवती होवाथी जल्दी पुरुं कराववाना इरादाथी **शिवपुरीमां** बिराजता मुनिराजोने ते माटे विनति करी, तेथी तेमणे सहर्ष आ काम उपाडी लीधुं.

व्याख्यातृचूडामणि शासनदीपकजी श्रीमान् **विद्याविजयजी** महाराजे उत्तरार्द्धनी बन्ने वृत्तिओनुं घणा परिश्रमपूर्वक संशोधन कर्युं. शान्तमूर्त्ति मुनिराज **श्रीजयन्तविजयजीए** उत्तरार्द्धनी बन्ने वृत्तिओ उपर विद्यार्थीओने उपयोगी थाय तेवुं सरल टिप्पण लखी आप्युं, तेमज मुनिराज श्री**हिमांशुविजयजी** अनेकान्तीए एक सुंदर प्रस्तावना ( आमुख ) लखी आपी. उपर्युक्त सौना सहकारी परिश्रमथी तेमज आ ग्रन्थना प्रकाशन कार्य माटे आर्थिक सहायता आपनारा उदार गृहस्थो ( जेनी यादी प्रारंभमां आपवामां आवी छे. )नी मददथी आ ग्रन्थने प्रसिद्धिमां मुकवा अमो भाग्यशाली थया छीए.

आ ग्रन्थनुं संशोधन नीचे लखेली हस्तलिखित बे प्रतिओने आधारे करवामां आव्युं छे. तेथी ते बन्ने प्रतिओना मालिको

अने बन्ने ज्ञानमंदिरोना व्यवस्थापकोनो पण आभार मानवो उचित धारीये छीये.

१ (क) वि. संवत १९६९ ना ज्येष्ठ मासमां लखेली, श्री **वडोदरा जैन ज्ञानमंदिर**नी प्रवर्तकजी महाराज श्री**कान्तिविजय**जी महाराजना शास्त्र संग्रहनी, श्रीयुत पंडित **लालचन्द्र भगवानदास** गांधी द्वारा प्राप्त.

२ (ख) वि.संवत् १८९९ना ज्येष्ठ शुदि १३, मुनि अमृतविजये लखेली, **श्रीविजयधर्मलक्ष्मी ज्ञानमंदिर आगरा**नी, अ० नं० २७४९, विषय नं० १८६.

अन्तमां संशोधन करनार तेमज टिप्पण अने प्रस्तावना लखी आपनार उक्त मुनिराजो तथा पंडितजीनो अने प्रकाशन कार्य माटे आर्थिक सहायता माटे उपदेश आपनार मुनिराज **श्रीविशालविजयजी**नो तथा आर्थिक सहायता आपनारा सद्गृहस्थोनो उपकार मानवा साथे, जनता आ पुस्तकनो सारी रीते लाभ लइ अमारा परिश्रमने सफल करे एटलुं इच्छी विरमीए छीए

प्रकाशक.

---

# आमुखम् ।

व्याकरणात् पदसिद्धिः पदसिद्धेरर्थनिर्णयो भवति ।
अर्थात् तत्त्वज्ञानं तत्त्वज्ञानात् परं श्रेयः ॥ १ ॥

हंहो ! विद्याविलासिनो विपश्चिद्धुर्यवर्याः ! आर्याः ! नैकशोऽनुभूतचरमिदं व्याकरणवाङ्मयविद्याविनोदवतां श्रीमतां भवतां विपश्चितां, प्रसिद्धप्रायं श्रुतपूर्वं च प्रौढपुण्यप्राप्तप्रतिभाप्राग्भारप्रतिपन्नानां पण्डितश्रेष्ठानां यद् व्याकरणज्ञानं समस्तैर्मनुष्यैः प्रथमतः सम्यग्गृहीत्योपार्जनीयमिति । व्याकरणशब्दस्य व्युत्पत्तिस्तु प्रचण्डवैयाकरणतार्किकमतिमतां मान्यैर्ग्रन्थानां चतुश्चत्वारिंशदधिकचतुर्दशशतकृद्भिः श्रीहरिभद्राचार्यैरावश्यकवृत्तावेवमुक्ता "व्याक्रियन्ते लौकिक-सामयिकाः शब्दा अनेनेति व्याकरणं-शब्दशास्त्रम्" अनया व्युत्पत्त्या काव्यालङ्कार-तर्क-योग-ज्योतिः-प्रमुखशास्त्राणि नास्माद् व्याकरणज्ञानादृते सम्यक्तया पठितुं शक्यन्त इति स्फुटतरं प्रतीयते । व्याकरणं हि द्वारं सर्वशास्त्राणां संयमः सर्वसिद्धीनामिव; एतदेव मूलमशेषविद्यानां ब्रह्मचर्याश्रमोऽखिलाऽऽश्रमाणामिव; न चैतदस्माकं मनःकल्पितमतिशयोक्तिमिश्रितं वा वयं ब्रूमहे, किन्तु निःशेषयोगीशध्येयैर्निर्मलसकलकलाकलनैकपटुभिरत्रभवद्भिः सर्वज्ञैः सर्वदर्शिभिस्तीर्थङ्करैः " वयणविहत्तिए कुसलो " इत्यादिभिः

प्रतिपादितपूर्वमेव व्याकरणमहत्त्वमार्षग्रन्थेषु । तन्त्रान्तरीयैरपि समर्थितं चैतद् " * **एकः शब्दः सम्यक्श्रुतः स्वर्गे लोके कामधुग् भवति** " इत्यादिवचनैः । न चैवं मन्तव्यं यद्वयमेकान्तेन व्याकरणवाङ्मयस्यैवाऽऽवश्यकतां दर्शयाम । किन्त्वेवं ब्रूमहे यत् पूर्वं व्याकरणं पठितव्यं तेन सौष्ठवोपेतं भाषापाटवं प्राप्य पश्चात्तर्क-काव्य-कोषालङ्कार-ज्योतिर्योगमुख्यानि शास्त्राण्यपि पठितव्यान्येव, न ह्येकशास्त्रेण कश्चिदपि मनुष्यः सर्वत्र सर्वदा सर्वशास्त्रेषु मान्यतां पटुतां कार्यसिद्धिं वा प्राप्नुयादिति तु प्रतिप्राणि प्रतीतमेव । प्रोक्तं च केनचित्कोविदेन—

" **एकशास्त्रमधीयानो न विद्याच्छास्त्रसञ्चयम्** " ।

व्याकरणादीनि च निःशेषशास्त्राण्यर्थतः श्रीमद्भिस्तीर्थंकृद्भिः पूर्वं संशयादिदोषरहितेन सहितेन विमलेन केवलज्ञानेन विलोक्य जगद्धिताय प्रतिपादितानीति तु विज्ञातपूर्वमेव रहस्यज्ञानां प्रज्ञाशालिनां विज्ञानाम् । ननु कथमिदमुक्तं युक्तं भवेत् ?, व्याकरण-काव्य-न्याय-ज्योतिः-छन्दःप्रभृतीनि शास्त्राणि तु पाणिनि-वाल्मीकि-गौतम-गर्ग-पिङ्गलाद्याचार्यैं रचितानीति प्रसिद्धिः, मैवं वोचः, पाणिन्यादिभ्योऽपि बहुकालपूर्वत एव निखिलकलाकलनैकविज्ञैः सर्वज्ञैः श्रीमत्तीर्थंकरैरेव व्याकरणादिविद्या-कलानां प्रोक्तत्वान्न कोऽपि सर्वज्ञादृते कस्याश्चिदपि अविकलकलाया आदिकर्त्ता

---

* पातञ्जलमहाभाष्ये ।

भवितुमर्हतीति मनीषिणां मतम् । भणितं च भव्यभणितिकुशलैः सर्वज्ञकल्पैर्भगवद्भिः श्रीहेमचन्द्राचार्यैः श्रीच्छन्दोऽनुशासनस्य स्वोपज्ञायां विज्ञज्ञेयायां टीकायाम्—

" न हि सूक्तं किञ्चिदार्हतमुपदेशमन्तरेण जगत्यस्ति । "

प्रमाणमीमांसायामप्येत एवाचार्या अवोचन्—

" अनादय एवैता विद्याः सङ्क्षेपविस्तरविवक्षया नव-नवीभवन्ति तत्तत्कर्तृकाश्चोच्यन्ते " ( पृ. २ ) ।

ततो निर्गतसन्देहमिदं समस्तप्रशस्तशास्त्रविद्यानामर्थतः श्री-तीर्थकृद्भिः प्रतिपादनम् । तत्प्रतिपादितार्थमवधार्य तत्तद्देश-काल-भाविलोकावश्यकतामवेक्ष्य तत्तद्देशीयभाषा-युक्त्यादिद्वारा गुणिगण-गणनीया गुणगरिष्ठा गणधरास्ते ते च पाणिनि-गौतम-गर्ग-पिङ्गल-सिद्धसेनदिवाकर-हरिभद्र-हेमचन्द्रप्रभृतयः सन्मतय आचार्या-स्तानि तानि व्याकरणादीनि शास्त्राणि शब्दतो रचयामासुरिति तु वयमपि मन्यामहे समुद्घोषयामहे च सर्वदा ।

चतुर्विंशतितमेन भगवता श्रीमहावीरतीर्थकृता पुनर्बाल्य एव वयसि व्याकरणविषयाणां गहनानामिन्द्रकृतानां प्रश्नानामु-त्तरदानकाले पाठकसमक्षमेव शब्दशास्त्रं निगदितम्, तदेव चेन्द्राय प्रोक्तत्वाद् ×ऐन्द्रव्याकरणनाम्ना प्रसिद्धिमापत् । अस्य च व्या-करणस्य विशेषोपयोगित्वात्समीचीनत्वाद्वा पण्डितबोपदेवेन शब्द-

---

× इन्द्रप्रश्नोद्भवत्वादस्यापरं नामैन्द्रमप्यस्ति ।

शास्त्राणां तत्कर्तॄणां च नामोल्लेखे प्रथमतयोल्लेखः कृतः । तथा चायं तत्कृतः श्लोकः—

> इन्द्रश्चन्द्रः काशकृत्स्नापिशली-शाकटायनाः ।
> पाणिन्यमर-जैनेन्द्रा† जयन्त्यष्टौ च शाब्दिकाः ॥
> ( धातुपाठे ).

सारस्वतकृताऽपि—

> " इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः " ।

इति मङ्गलश्लोकेऽस्यैव नाम प्रथमं गृहीतं तेन विज्ञायतेतराम्, यदेतद् व्याकरणं पुरा तद्वेदिनां हृदयाम्बुजे महत्तरं स्थानमासादितवदिति, परं साम्प्रतमस्माकं दुर्दैववशान्नैतत्क्वचिदप्युपलभ्यत इति महद्दुःखस्थानमस्ति । अनुयोगद्वाराख्यागमे त्वेकाक्षर-द्व्यक्षरादिनामविषयस्य सङ्क्षेपेण, प्रथमादिसम्बोधनान्ताष्टविभक्ति-समास-सप्तक-तद्धिताख्यातप्रत्ययविषयस्य च विस्तरेणोल्लेखो दृश्यतेतराम् । पाणिनिमुनितुल्यव्याकरणविद्याविशारदैः *श्रीहेमचन्द्राचार्यमिश्रैस्तु सर्वव्याकरणेषु मुकुटायमानं मूलसूत्र-लघुवृत्ति-बृहद्वृत्ति-बृहन्न्यास-धातुपाठादिकलितं सपादलक्षश्लोकप्रमाणं साङ्गं नाम्ना

---

† श्रीविनयविजयोपाध्यायप्रभृतीनां मतेन जैनेन्द्र इति भगवद्विहितव्याकरणस्य निर्देशः ।

* एषामाचार्याणां सत्तासमयो वि. सं. ११४५ तः १२२९ पर्यन्तम् ।

श्रीसिद्धहैमचन्द्रशब्दानुशासनं स्वयमेकवर्षेण संदृब्धम् * । ततोऽस्माकमागमग्रन्थकृद्भिस्तदन्याचार्यैश्च सकलाः किल कला विद्याश्च प्रतिपादिता इति स्पष्टतमं सिद्धम् ।

अथ प्रस्तुतव्याकरणकर्तुः प्रस्तुतव्याकरणस्य च समीक्षां कुर्महे ।

व्याकरणग्रन्थस्यास्य † सिद्धान्तरत्नापराभिधस्य के किल कोविदाः कर्त्तारः ? ते च किन्नामधेयाः ? किन्देशीयाः ? किमाम्नायाश्च ? इत्यादिका जिज्ञासाः स्वभावत एवोल्लसेयुर्जिज्ञासुप्रज्ञानां मनोज्ञप्राज्ञानां चेतसि । किन्तु प्रथममिदमावेदनीयं नानुचितं भवेद् यदस्य व्याकरणस्य बहूनि मूलसूत्राणि तु प्रायेण सारस्वतचन्द्रिकाव्याकरणस्य प्रतिमतां बिभ्रति, ततोऽस्य मूलसूत्रकारास्तु सारस्वतचन्द्रिकाकारा एवानुमन्तव्या इत्यस्मन्मतम्, वृत्तिकारस्त्वस्य सहृदयहृदयचकोरचयचन्दनचन्द्रः श्रीजिनचन्द्रोऽस्तीति प्रान्तलिखितैकश्लोकावयवेन प्रकटं प्रतीयते । परन्तु श्रीजिनचन्द्रनाम्नामनेकाचार्य–मुनिवर्याणां सञ्जाततत्वेन कतमः स श्रीजिनचन्द्रो योऽस्य वृत्तिकार इति विचारणीयम् ।

---

* सूत्र-वृत्ति-लिङ्गानुशासन-धातुपाठ-गणपाठ इति पञ्च व्याकरणस्याङ्गानि । श्रीहेमाचार्यैः श्रीसिद्धहेमाभिधानं पञ्चाङ्गमपि व्याकरणं सपादलक्षग्रन्थप्रमाणं संवत्सरेण रचयाञ्चक्रे, इति प्रबन्धचिन्तामणिस्थसिद्धराजप्रबन्धे ।

† सिद्धान्तरत्निका–सिद्धान्तरत्नयोर्नार्थभेदः कश्चिदप्यस्ति

अनेकविशिष्टशिष्टगरिष्ठमतिकृतानि किलास्मिन् जगति पाणिनि – शाकटायन – बुद्धिसागर–हेमचन्द्रप्रमुखान्यनेकानि व्याकरणानि सन्ति, परन्तु बृहत्तरव्याकरणपठने कलिकालकलया क्षीयमाणबुद्धिशरीरादिशक्तीन् लोकान् वीक्ष्य स्वल्पप्रयतनकालेन तादृशा अल्पमतयः कार्यसाधकं व्याकरणज्ञानं कृत्वा सकलजनध्येयं चतुर्थपुरुषार्थं साधयन्त्वित्युपकारकरणान्तःकरणेनानेन श्रीजिनचन्द्रेणातिसंक्षेपस्तोकसूत्रवृत्तिकरणेन लघुतमं व्याकरणमकारि। साम्प्रतमुपलभ्यमानेषु प्राचीनव्याकरणेषु प्रस्तुतव्याकरणमेव लघुतममिति मे मतिः। अस्मिन् व्याकरणे सूत्राणि प्रायशः सारस्वतीयान्येव प्रतिभान्ति। सारस्वतसूत्रेभ्यः कुत्र कुत्र क्रमभेदः, क्वचित् क्वचित् सूत्र-शब्द-प्रकरणभेदस्तु विद्यत एव, कुत्रचित् कुत्रचित् स्थले हैमव्याकरणादिमतमनुसृत्यापि वार्तिकादि निबद्धं यथा—

'ङे[1] नशेरत एत्वं वा वाच्यम्'

—सिद्धान्तरत्निका पृ. ९९.

परिभाषाप्रकरणं त्वस्मिन्नवीनमेव संयोजितं श्रीजिनचन्द्रगणिना। अस्य व्याकरणस्य वृत्तेरतिसंक्षिप्तत्वात्तत्रास्यां बहवः प्रयोगा लिखिताः; केषांचित्तु मूलप्रयोगाणामपि साधकानि सूत्राणि न सन्त्यत एतत्पिपठिषूणां छात्राणां महान् क्लेश उपजायते। तत

१ 'नशेर्नेशा वाऽङि' हैमव्याकरणे ४–३–१०२॥

उत्तराध्ययनाद्यनेकग्रन्थसम्पादकैः, 'आबू'प्रभृतिग्रन्थलेखकैः शान्त्या भावितात्मभावैः पूज्यमुनिराजैरिन्द्रियजयं तन्वानैः श्रीजयन्तविजयमहाराजैर्वृत्तिद्वयस्य सिद्धान्तमुक्तानामकं सरलं सुन्दरसुपयुक्तं टिप्पनं व्यधायि। अस्मिन् टिप्पने मूलस्थप्रयोगाणां साधकानि कानिचित् सूत्राणि व्याकरणान्तरादानीय प्रयोगसिद्धिः साधिता, नवीनोदाहरणानि च बहूनि दत्त्वा मूलसूत्रभावो सुस्पष्टितस्तैः। सामुखस्यास्य ग्रन्थस्य संशोधनादौ साहाय्यं वितन्वन् संशोधनादिकलाकुशलः पण्डितलालचन्द्रोऽत्र धन्यवादमर्हति।

मार्गोपदेशिकादिनवीनव्याकरणानां पठनादस्य श्रीसिद्धान्तरत्निकाव्याकरणस्य पठनेन समधिकं दृढतरं च ज्ञानं भवितुमर्हत्यतः संक्षेपरुचयः शुचयः च्छात्रा एतद् व्याकरणमधीयाऽऽप्स्यन्ति कार्यसाधकं ज्ञानम्, सफलयिष्यन्ति च मूलसूत्र-वृत्तिविधायक-सम्पादक—प्रकाशकपरिश्रममश्रमेणेत्याशासानो विरमत्ययम्—

| शिवपुर्याम्. | विशेषवेदिनां वशंवदः— |
|---|---|
| वीरसं. २४५६. | मुनिहिमांशुविजयोऽनेकान्ती. |
| कार्तिकशुक्ला ९. | |
| धर्मसंवत् ८. | |



# श्रीसिद्धान्तरत्निकाव्याकरणस्य विषयानुक्रमणिका.

## आख्यातवृत्तौ–

# भारतीस्तवनम् ।

( १ )

यन्नामस्मृतिमात्रतोऽपि कृतिनां वाचां विलासाः क्षणाद्
जायन्ते प्रतिवादिकोविदमदध्वंसक्षमाः सर्वतः ।
तां त्रैलोक्यगृहप्ररूढकुमतध्वान्तप्रदीपप्रभां
वन्दे शारदचन्द्रसुन्दरमुखीं श्रीशारदां देवताम् ॥

—श्रीवादिदेवसूरिः, स्याद्वादरत्नाकरे.

( २ )

स्तुत्यं तन्नास्ति नूनं जगति न जनता यत्र बाधां विदध्या-
दन्योऽन्यस्पर्धिनोऽपि त्वयि तु नुतिविधौ वादिनो निर्विवादाः।
यत्तच्चित्रं न किञ्चित्स्फुरति मतिमतां मानसे विश्वमातः !
ब्राह्मि ! त्वं येन धत्से सकलजनमयं रूपमर्हन्मुखस्था ॥

—श्रीमाणिक्यचन्द्रसूरिः, काव्यप्रकाशसङ्केते.

( ३ )

या कृत्स्नासुमतां सदा सुखकरा यां सेवते सद्गुणो
भारत्या लभते मुदं शिशुगणस्तस्यै कुरुध्वं नमः ।

यस्याः पूज्यतमा भवन्ति भविनो यस्याः प्रभावो महान्
यस्यामस्ति शुभो बृहद्गुणगणः सा गीः प्रदद्यान्मतिम् ॥
—मुनिहिमांशुविजयोऽनेकान्ती.

( ४ )

स्तावं स्तावं सुगुणकलितां भारति ! त्वां सदाऽहं
स्मारं स्मारं हृदि च यतनात्सार्ववक्त्राब्जपूताम् ।
धारं धारं कृतिजननुतां भव्यसौख्यप्रदात्रीं
याचे मातः ! सुवचननिधे ! ज्ञानदानाय शीघ्रम् ॥
—अनेकान्ती.

( ५ )

या कुन्देन्दुतुषारहारधवला या शुभ्रवस्त्रावृता
या वीणावरदण्डमण्डितकरा या श्वेतपद्मासना ।
या ब्रह्माच्युतशङ्करप्रभृतिभिर्देवैः सदा वन्दिता
सा मां पातु सरस्वती भगवती निःशेषजाड्यापहा ॥

( ६ )

शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा सर्वदाऽस्माकं सन्निधिं सन्निधिं क्रियात् ॥

( ७ )

पातु वो निकषग्रावा मतिहेम्नः सरस्वती ।
प्राज्ञेतरपरिच्छेदं वचसैव करोति या ॥

---



जगत्पूज्यश्रीविजयधर्मसूरिभ्यो नमः ।

श्रीजिनचन्द्रसूरिरचिता

# सिद्धान्तरत्निका ।

## ( सारस्वतवृत्तिः )

श्रीसद्गुरुपदाम्भोजं नत्वा शब्दार्थसिद्धये ।
सरस्वत्युक्तसूत्राणां कुर्वे सिद्धान्तरत्निकाम्[1] ॥१॥

## अथ संज्ञाप्रकरणम् ।

१ अ इ उ ऋ ऌ समानाः । अ इ उ ऋ ऌ एते पञ्च वर्णाः समानसंज्ञाः स्युः ॥

२ ए ऐ ओ औ सन्ध्यक्षराणि । ए ऐ ओ औ एते चत्वारो वर्णाः सन्ध्यक्षरसंज्ञाः स्युः ॥

३ उभये स्वराः । समानाः सन्ध्यक्षराणि चोभये स्वरसंज्ञाः स्युः ॥

---

१ क. रत्नकम् ।

४ **अवर्जा नामिनः** । अवर्णवर्जाः स्वरा नामिसंज्ञाः स्युः ॥

५ **ह्रस्व–दीर्घ–प्लुतभेदाः सवर्णाः** । स्वराणां ह्रस्व-दीर्घ-प्लुतभेदाः सवर्णाः स्युः । अ ह्रस्वः । आ दीर्घः । आ ३ प्लुतः । एवमिकारादीनामपि। ऌवर्णस्य दीर्घो न। सन्ध्यक्षराणां ह्रस्वो न। ऋ–ऌवर्णौ च सवर्णौ वक्तव्यौ ॥

६ **हयवरल ञणनङम झढधघभ जडदगब खफछठथ चटतकप शषस** । [ हसा व्यञ्जनानि ]

७ **आद्यन्ताभ्याम्** । आद्यन्तवर्णाभ्यां गृह्यमाणा मध्यगैवर्णा आद्यन्तसंज्ञाः स्युः । स्वस्यापि तस्य प्रत्याहार-संज्ञा । यथा हि–अकार–बकाराभ्यां गृह्यमाणा मध्यगवर्णा अब-संज्ञाः । स अबप्रत्याहारः—अ इ उ ऋ ऌ ए ऐ ओ औ ह य व र ल ञ ण न ङ म झ ढ ध घ भ ज ड द ग ब इति। एवम् इल जब चप इत्यादयोऽपि ॥

८ **कार्यायेत्** । कार्यायोच्चार्यमाणो वर्ण इत्संज्ञः स्यात् । यस्येत्संज्ञा तस्य लोपः । वर्णादर्शनं लोपः । वर्णविरोधो लोपश् । प्रत्ययादर्शनं लुक् । स्वररहितहसाः संयोगसंज्ञाः स्युः ॥

९ **कु चु टु तु पु वर्गाः** । [ उकारः पञ्चवर्णपरिग्रहणार्थः। कु इत्यनेन क ख ग घ ङ इत्येवं प्रत्येकमेते स्वीयपञ्चकग्राहकाः ॥]

१० **अरेदो नामिनो गुणः**। अर् ए ओ एते गुणसंज्ञाः, ते च नामिनां स्थाने भवन्ति ॥

---

१ क. ०मव० । २ क. ०हसौ हसाश्च ।

११ आऽऽर् ऐ औ वृद्धिः । आ आर् ऐ औ एते वृद्धिसंज्ञाः, ते च स्वराणां स्थाने स्युः ॥

१२ अन्त्यस्वरादिः टिः । अन्त्यस्वरः, तस्मात् परो वर्णश्च टिसंज्ञः स्यात् ॥

१३ अन्त्यात् पूर्व उपधा । अन्त्यवर्णात् पूर्वो वर्ण उपधासंज्ञः स्यात् ॥

१४ ह्रस्वो लघुः । १५ दीर्घो गुरुः ।

१६ विसर्गानुस्वारसंयोगपरो ह्रस्वोऽपि गुरुः ।

१७ विभक्त्यन्तं पदम् ।

इति संज्ञाप्रक्रिया ।

---

## अथ परिभाषाः ।

१ सामान्य–विशेषयोर्विशेषविधिर्बलीयान् ।

२ गौण–मुख्ययोर्मुख्ये कार्यसंप्रत्ययः ।

३ नित्यानित्ययोर्नित्यविधिः प्रयोक्तव्यः ।

४ प्रत्ययग्रहणे तदन्तस्य ग्रहणम् ।

५ एकदेशविकृतमनन्यवत् ।

६ पर्जन्यवल्लक्षणप्रवृत्तिः ।

७ आगमा यदवयवीभूतास्तस्यैवाङ्गत्वेन गृह्यन्ते ।

८ असिद्धं बहिरङ्गमन्तरङ्गे ।

९ निमित्ताभावे नैमित्तिकस्याप्यभावः ।

१० कृताकृतप्रसङ्गी विधिर्नित्यः ।

११ मित्रवदागमः ।

१२ टित्—कितावाद्यन्तयोर्वक्तव्यौ ।

१३ मिदन्त्यात् स्वरात् परो वक्तव्यः ।

१४ शत्रुवदादेशः ।

१५ यदादेशस्तद्वद् भवति । न तु वर्णमात्रविधौ ।

१६ अविशिष्टादेशः सादृश्येन । वर्णस्थान—प्रयत्नैः सादृश्यम् ।

१७ अ—कु—ह—विसर्जनीयानां कण्ठः ।

१८ इ—चु—य—शानां तालु ।

१९ ऋ—टु—र—षाणां मूर्धा ।

२० ऌ—तु—ल—सानां दन्ताः ।

२१ उ—पूपध्मानीयानामोष्ठौ ।

२२ एदैतोः कण्ठ—तालु ।

२३ ओदौतोः कण्ठोष्ठम् ।

२४ वकारस्य दन्तोष्ठम् ।

२५ जिह्वामूलीयस्य जिह्वामूलम् ।

२६ नासिकाऽनुस्वारस्य ।

२७ ञ—म—ङ—ण—नानां नासिका च ।

२८ स्थानयादेशयोः सम्भवे यथासङ्ख्यं वाच्यम् ।

२९ षष्ठ्यादेशोऽन्त्यस्य वक्तव्यः ।

३० अनेकवर्णः शिच्चादेशः सर्वस्य ङिदन्तस्य ।

३१ वर्णग्रहणे सवर्णग्रहणम् ।

३२ कार–तपरयोर्ग्रहणे तस्यैव, न सवर्णस्य ।

३३ परिभाषाः प्रायशः प्रवर्तन्ते ।

इति परिभाषाप्रक्रिया ।

---

## अथ स्वरसन्धिः ।

१ इ यं स्वरे । इवर्णो यं स्यात्, स्वरे परे ॥

२ हसेऽर्हहसः । स्वरात् परो रहवर्जितो हसो हसेऽवसाने च वा द्विः स्यात् ॥

३ झभे जबाः । झसानां झभे जबाः स्युः । स्वरहीनं परेण योज्यम् । दद्ध्यानय, दध्यानय ॥

४ रहाद् यपो द्विः । स्वरपूर्वाभ्यां रहाभ्यां परो यपो वा द्विः स्यात् । गौर्य्यत्र, गौर्यत्र । नह्य्यस्ति, नह्यस्ति । क्वचित् शषस्यापि द्वित्वम् । पार्श्श्वम् । वर्ष्ष्म ॥

५ उ वम् । उ वं स्यात् स्वरे । मद्ध्वत्र, मध्वत्र ॥

६ ऋ रम् । ऋ रं स्यात् स्वरे । पित्रर्थः ॥

७ ऌ लम् । ऌ लं स्यात् स्वरे । ऌित् ॥

८ ए अय् । ए अय् स्यात् स्वरे । नयनम् ॥

९ ओ अव् । ओ अव् स्यात् स्वरे । भवनम् ॥

१० ऐ आय् । ऐ आय् स्यात् स्वरे । नायकः ।

११ औ आव् । औ आव् स्यात् स्वरे । पावकः ॥

१२ य्वोर्लोपश् वा पदान्ते । पदान्ते अयादीनां य्वोर्लोपश् वा स्यात् । त आगताः, तयागताः । पट इह, पटविह । तस्मा इदम्, तस्मायिदम् । ता इह, ताविह ॥

१३ एदोतोऽतः । पदान्ते एदोतः परस्यातो लोपश् स्यात् । तेऽत्र । पटोऽत्र ॥

१४ सवर्णे दीर्घः सह । समानस्य सवर्णे सह दीर्घः स्यात् । दैत्यारिः । श्रद्धात्र । दधीह । श्रीशः । भानूदयः । होतॄकारः ।

१५ शकन्ध्वादिषु टेर्लोपो वाच्यः । शकन्धुः । कुलटा । मनीषा । हलीषा ॥

१६ अ इ ए । अवर्ण इवर्णे सह ए स्यात् । तवेदम् ॥

१७ उ ओ । अवर्ण उवर्णे सह ओ स्यात् । गङ्गोदकम् ॥

१८ ए ऐ ऐ । अवर्ण एकारे ऐकारे च सह ऐ स्यात् । तवैषा । तवैश्वर्यम् ॥

१९ ओ औ औ । अवर्ण ओकारे औकारे च सह औ स्यात् । तवौदनम् । ममौन्नत्यम् ॥

२० एदोदादौ धातौ पूर्वस्योपसर्गस्यावर्णस्य लोपः । प्रेजते । उपोषति ॥

२१ नामधातौ वा । प्रोत्रीयति, प्रौत्रीयति ॥

२२ ओत्वोष्ठयोः । पूर्वस्यावर्णस्य वा लोपः समासे । बिम्बोष्ठः, बिम्बौष्ठः । स्थूलोतुः, स्थूलौतुः । समासे इति किम् ? तवौष्ठः । तवौतुः ।

२३ ऋ अर् । अवर्ण ऋवर्णे सह अर् स्यात् । तवर्द्धिः ।

२४ ऋकारादौ धातौ आर् । उपार्च्छति ॥

२५ ऋते तृतीयासमासे । सुखार्तः । तृतीयासमासे किम् ? परमर्तः ॥

२६ नामधातौ वा । प्रार्षभीयति, प्रर्षभीयति ॥

२७ ऌ अल् । अवर्ण ऌवर्णे सह अल् स्यात् । तवल्लकारः, तवल्कारः ॥

२८ ऌदादौ नामधातौ वा आल् । प्राल्कारीयति, प्रल्कारीयति ॥

इति स्वरसन्धिः ।

---

## अथ प्रकृतिभावः ।

२९ नामी । अदसोऽमीशब्दः सन्धिं न याति । अमी अश्वाः ॥

३० स्वे द्वित्वे । द्विवचने ईदूदेदन्ताः सन्धिं न यान्ति । अग्नी अत्र । पटू अत्र । माले आनय ॥

**३१ औ निपातः ।** स्वरो निपातः सन्धिं न याति । अ अपेहि । इ इन्द्रं पश्य । उ उत्तिष्ठ ॥

**३२ ओदन्तो निपातश्च ।** अहो ईशाः ॥

**३३ ओदन्तो धौ वेतौ ।** विष्णो इति, विष्णविति, विष्ण इति ॥

**३४ ऋणामसवर्णे स्वरेऽसमासे पदान्ते वा ह्रस्वः ।** ह्रस्वे कृते सन्धिर्न । चक्रि अत्र, चक्रयत्र । मधु एतत्, मध्वेतत् । कर्तृ इदम्, कर्त्रिदम् । पदान्ते किम् गौर्यौ । असमासे किम् हर्य्यर्थम् ॥

**३५ पदान्ते समानानामृति लृति च वा ह्रस्वः ।** ब्रह्म ऋषिः, ब्रह्मर्षिः । दण्डि ऋषिः, दण्ड्यृषिः । मधु ऋकारः, मध्वृकारः । होतृ लृकारः, होतॄकारः । पदान्ते इति किम् ? आर्च्छत् ॥

**३६ दूरादाह्वाने टेः प्लुतः ।** दूरात् सम्बुद्धौ यद् वाक्यं तस्य टेः प्लुतो वा स्यात् ।

**३७ प्लुतः ।** प्लुतः सन्धिं न याति । एहि देवदत्त ३ अत्राधीष्व ॥

**३८ सप्तम्यर्थे ईदन्तं सन्धिं न याति ।** वातप्रमी आस्ते ॥

**३९ अप्लुतवदितौ ।** देवदत्तेति ॥

इति प्रकृतिभावः ।

---

## अथ व्यञ्जनसन्धिः ।

४० चपा अबे जबाः । पदान्ते चपा जबाः स्युः, अबे । षडत्र ॥

४१ अमे अमा वा । पदान्ते चपा अमे अमा वा स्युः । षण्मम, षड्मम ॥

४२ प्रत्ययमसे जबस्य नित्यं अमः । तन्मात्रम् ॥

४३ चपाच्छः शः । चपात् परस्य शस्य छो वा स्यादबे । वाक्छूरः, वाक्शूरः । अबे किम् ? वाक्श्चोतति ॥

४४ हो झभाः । चपादुत्तरस्य हस्य झभा वा स्युः । यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवति । तद्धविः, तद्हविः । वाग्घरिः, वाग्हरिः ॥

४५ स्तोः श्चुभिः श्चुः । सकार–तवर्गयोः शकार–चवर्गाभ्यां योगे शकार–चवर्गौ स्तः । योग उभयथा सम्बन्धः । कश्चरति । कश्शूरः । तच्चित्रम् । तच्छास्त्रम् ॥

४६ न शात् । शात् परस्य तोः श्चुत्वं न स्यात् । प्रश्नः ॥

४७ ष्टुभिः ष्टुः । सकार–तवर्गयोः षकार–टवर्गाभ्यां योगे षकार–टवर्गौ स्तः । कष्षष्ठः । कष्टीकते । तट्टीकते ॥

४८ न षि । षकारे स्तोः ष्टुर्न स्यात् । भवान् षष्ठः ॥

४९ टोरन्त्यात् । पदान्ते टवर्गात् परस्य स्तोः ष्टुर्न स्यात् । षण्नरः, षड्नरः । षट् सीदन्ति ॥

स्यादीनां स्तोः ष्टुत्वं न स्यात् । लिट्सु, लिट्त्सु ।

५० तोर्लि लः । तवर्गस्य लकारे लत्वं स्यात् । तल्लुनाति । भवाँल्लिखति ॥

५१ नः सक् छते । नान्तस्य पदस्याबे परे छते सक् स्यात् । राजंश्चित्रम् । भवांस्तनोति । अबे परे किम् ? सन्त्सरुः ॥

५२ न प्रशानः । प्रशान् तनोति ॥

५३ शे चग् वा । नान्तस्य पदस्य शे परे वा चक् स्यात् । भवान्च्छूरः, भवान् छूरः, भवाञ् शूरः, भवान्च् छूरः ॥

५४ ङ्-ण्-नो ह्रस्वाद् द्विः स्वरे । ह्रस्वात् पदान्ते ङकार-णकार-नकारा द्विः स्युः स्वरे परे । प्रत्यङ्ङिदम् । सुगण्णिह । राजन्निह ॥

५५ छः । ह्रस्वाच्छकारो द्विः स्यात् ॥

५६ खसे चपा झसानाम् । झसानां खसे चपाः स्युः । तव च्छत्रम् ॥

५७ दीर्घादपि । ह्रीच्छति ॥

५८ पदान्ते दीर्घाद् वा । लक्ष्मी छाया । लक्ष्मीच्छाया ॥

५९ टनात् सस्य वा धुट् । षट्त्सन्तः । सन्त् सः, सन् सः ॥

इति व्यञ्जनसन्धिः ।

---

## अथानुस्वारसन्धिः ।

६० **मोऽनुस्वारः** । पदान्ते मकारस्यानुस्वारः स्यात्, हसे परे । तं हसति ॥

६१ **नश्चापदान्ते झसे** । अपदान्ते नकारस्य मकारस्य-चानुस्वारः स्यात्, झसे हकारे च परे । यशांसि । पुंभ्याम् । स्वनड्वांहि ॥

६२ **यमा यपेऽस्य** । अनुस्वारस्य यमा भवन्ति, यपे परे । अस्य यपस्य सवर्णाः । शान्तः । अङ्कितः । अञ्चितः । कुण्ठितः । गुम्फितः ॥

६३ **वा पदान्तस्य** । पदान्तेऽनुस्वारस्य यमा वा स्युः, यपे परे । त्वं करोषि, त्वङ् करोषि । तं तनोति, तन् तनोति । संयता, सँय्यता । संवत्सरः, सँव्वत्सरः । यं लोकम्, यँल्लोकम् ॥

६४ **क्विबन्ते राजतौ परे समो मस्य म एव स्यात्** । सम्राट् ॥

६५ **य-व-ल-म-नपरे हकारे मस्य य-व-ल-म-ना वा** । किं ह्यः, किय् ह्यः । किं ह्वलयति, किव् ह्वलयति । किं ह्लादयति, किल् ह्लादयति । किं ह्मलयति, किम् ह्मलयति । किं ह्नुते, किन् ह्नुते ॥

इत्यनुस्वारसन्धिः ।

---

## अथ विसर्गसन्धिः ।

६६ **विसर्जनीयस्य सः** । विसर्जनीयस्य सः स्यात्, खसे । कस्तनोति ॥

६७ **शसपरे खसे विसर्गस्य विसर्ग एव** । कः त्सरुः । रामः ष्साता । घनाघनः क्षोभणः ॥

६८ **कुप्वोः ᳵक ᳶपौ वा** । कवर्ग–पवर्गसम्बन्धिनि खसे विसर्गस्य ᳵकᳶपौ वा स्तः । ᳵक ᳶपाविति जिह्वामूलीयोपध्मानीययोः संज्ञा । क ᳵ करोति, कः करोति : कᳶपचति, कः पचति ॥

६९ **वाचस्पत्यादयो निपात्याः** । वाचस्पतिः । भास्करः । यशस्काम्यति । नमस्करोति । पुरस्करोति । तिरस्करोति । इत्यादयः ॥

७० **रोऽरात्रिषु** । अह्नो विसर्गस्य पदान्ते रः स्यात्, न तु रात्र्यादिषु । अहर्गणः । न तु रात्र्यादिष्विति किम् ? अहो-रात्रम् । अहो रूपम् । अहो रथन्तरम् ॥

७१ **अतोऽत्युः** । अकाराद् विसर्गस्य उः स्यात्, अति परे । कोऽर्थः ॥

७२ **हबे** । अकाराद् विसर्गस्य उः स्याद्, हबे । देवो याति ॥

७३ **आदबे लोपश्** । अवर्णाद् विसर्गस्य लोपश् स्याद्, अबे । देवा अत्र ॥

७४ **स्वरे यत्वं वा** । देवा यिह, देवा इह ॥

७५ **क्वचिन्नामिनोऽपि** । भो हरे । भगो नमस्ते । अघो याहि ॥

७६ **नामिनो रः** । नामिनः परस्य विसर्गस्य रः स्याद्, अबे । अग्निरत्र । पटुर्वक्ता ॥

७७ **रः** । रेफाज्जातस्य विसर्गस्य रः स्याद्, अबे । प्रातरत्र । अन्तर्गतः ॥

७८ **खपे वा** । गीर्पतिः, गीᳲपतिः, गीःपतिः ॥

७९ **रि लोपो दीर्घश्च** । रेफस्य रेफे लोपः स्यात्, पूर्वस्य च दीर्घः । हरी राजते ॥

८० **सैषाद् हसे** । सशब्दादेषशब्दाच्च विसर्गस्य लोपः स्यात्, हसे । स चरति । एष हसति ॥

क्वचित् सशब्दाद् विसर्गस्य स्वरेऽपि लोप एव, न तु लोपशा् । सैष दाशरथी राम इत्यादौ ॥

इति विसर्गसन्धिः ।

---

## अथ षड्लिङ्गप्रकरणम् ।

### तत्र स्वरान्ताः पुंलिङ्गाः ।

१ **अविभक्ति नाम** । विभक्तिरहितं शब्दरूपं नामसंज्ञं स्यात् ॥

२ तस्मात् सि औ जस् १। अम् औ शस् २। टा भ्याम् भिस् ३। ङे भ्याम् भ्यस् ४। ङसि भ्याम् भ्यस् ५। ङस् ओस् आम् ६। ङि ओस् सुप् ७। नाम्नः पराः स्यादयः सप्त विभक्तयः स्युः। तत्राप्येकत्व-द्वित्व-बहुत्वेषु एकवचन-द्विवचन-बहुवचनानि स्युः॥

तत्राकारान्तो देवशब्दः। देव + सि इकारः 'सेर्डा धेः' इत्यादिविशेषणार्थः।

३ सोर्विसर्गः। नाम्नः सकार-रेफयोर्विसर्गः स्याद्, रसे पदान्ते च। देवः॥

देवौ। देव + जस् जकारो 'जसि' इति विशेषणार्थः। देवाः। देव + अम्

४ अम्-शसोरस्य। समानादम्-शसोरकारस्य लोपः स्यात्। देवम्॥

देवौ। देव + शस् शकारः 'शसि' इति विध्यर्थः।

५ सो नः पुंसः। पुंलिङ्गात् समानात् परस्य शसः सकारस्य नः स्यात्, न त्वम्-शसीत्यात्वे।

६ शसि। शसि परे पूर्वस्य दीर्घः। देवान्॥

देव + टा टकारः 'टेन' इति विध्यर्थः।

७ टेन। अकारात् टा इनः स्यात्। देवेन॥

८ अद् भिः। अत आत्वं स्याद्, भादिस्यादिविभक्तौ। देवाभ्याम्॥

९ भ्यः । अतः परस्य भिसो भस्याकारादेशः स्यात् । 'अ इ ए' 'ए ऐ ऐ' देवैः ॥

देव + ङे । ङे-ङसि-ङस्-ङीनां ङकारो ङित्कार्यार्थः । ङसेरिकारः षष्ठीभेदज्ञापनार्थः ।

१० ङे अक् । अतः परस्य ङे इत्यस्यागागमः स्यात् । देवाय देवाभ्याम् ।

११ ए स्भि बहुत्वे । अत एत्वं स्यात्, सकार-भकारादौ स्यादिबहुवचने । देवेभ्यः ॥

१२ ङसिरत् । अतः परो ङसिरत् । देवात् देवाभ्याम् देवेभ्यः ॥

१३ ङस् स्य । अतः परो ङस् स्यः स्यात् । देवस्य ॥

१४ ओसि । अत ओसि एत्वं स्यात् । देवयोः ॥

१५ नुडामः । समानादामो नुट् स्यात्, पुंसि तु ह्रस्वात् ।

१६ नामि । पूर्वस्य दीर्घः स्यात्, नामि । देवानाम् ॥ देवे देवयोः ।

१७ क्विलात् षः सः कृतस्य । कवर्गादिलाच्च कृतस्य सस्य षः स्यादन्ते स्थितस्य न । देवेषु ॥

१८ सिर्धिसंज्ञः स्यात् ।

१९ समानाद् धेर्लोपोऽधातोः । ह्रस्वात् समानादेदोतश्च परस्य धेर्लोपः स्याद्, अधातोः । सम्बोधने हेशब्दस्य प्राक्

प्रयोगो वा । हे देव हे देवौ हे देवाः । एवं घट–पट–राम–कृष्णादयः ॥

सर्व विश्व उभ उभय अन्य अन्यतर इतर डतर डतम सम सिम नेम एक पूर्व पर अवर दक्षिण उत्तर अपर अधर स्व अन्तर त्यद् तद् यद् एतद् अदस् इदम् द्वि किम् युष्मद् अस्मद् एते सर्वादयस्त्रिलिङ्गाः । सर्वः सर्वौ ।

२० जसी । अदन्तात् सर्वादेर्जस ईः स्यात् । सर्वे ॥ सर्वम् सर्वौ सर्वान् ।

२१ षु–र्नो णो नन्ते । षकार–रेफ–ऋवर्णेभ्यः परस्यैकपदस्थस्य नस्य णः स्यात्, अन्ते स्थितस्य न ।

२२ अट्–कु–प्वन्तरेऽपि । अट्–कु–प्वनुस्वार–विसर्गव्यवधानेऽपि नस्य णः स्यात् । सर्वेण सर्वाभ्याम् सर्वैः ।

२३ सर्वादेः स्मट् । अदन्तात् सर्वादेर्ङे इत्यस्य स्मट् स्यात् । सर्वस्मै सर्वाभ्याम् सर्वेभ्यः ।

२४ अतः । अदन्तात् सर्वादेरतः स्मट् स्यात् । सर्वस्मात् ॥ सर्वाभ्याम् सर्वेभ्यः । सर्वस्य सर्वयोः ।

२५ सुडामः । सर्वादेरवर्णान्तादामः सुट् स्यात् । सर्वेषाम् ॥

२६ ङि स्मिन् । सर्वादेरदन्तात् ङि स्मिन् स्यात् । सर्वस्मिन् ॥ सर्वयोः सर्वेषु । हे सर्व हे सर्वौ हे सर्वे ।

एवं विश्वादयोऽप्यकारान्ताः सिध्यन्ति ।

२७ पूर्वादीनां नवानां जस्–ङसि–ङीनामी–स्मात्–

स्मिनौ वा । पूर्वे, पूर्वाः । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । शेषं सर्ववत् ॥

२८ **प्रथम–चरम–तयायडल्पार्ध––कतिपय––नेमानां जसी वा** । प्रथमे, प्रथमाः । शेषं देववत् । नेमे, नेमाः । शेषं सर्ववत् ॥

२९ **तीयान्तस्य ङित्सु वा सर्ववत्** । द्वितीयस्मै, द्वितीयाय । द्वितीयस्मात्, द्वितीयात् । द्वितीयस्मिन्, द्वितीये । शेषं देववत् ॥

उभशब्दो नित्यं द्विवचनान्तः । उभौ २ । उभाभ्याम् ३ । उभयोः २ ।

निर्जरः । ३० **जरायाः स्वरादौ जरस् वा वक्तव्यः** । 'एकदेशविकृतमनन्यवद्' 'निर्दिश्यमानस्यादेशा भवन्ति' ।

सोमपाः सोमपौ सोमपाः। सोमपाम् सोमपौ । सोमपा+शस् ।

३१ **आतो धातोर्लोपः** । धातोराकारस्य लोपः स्यात्, शसादौ स्वरे । सोमपः ॥ 'क्विबन्तानां धातुत्वं न हीयते ।' सोमपा सोमपाभ्याम् सोमपाभिः। इत्यादि । एवं विश्वपाप्रभृतयः॥

हरिः ।

३२ **औ यू** । इदुदन्तात् पर औ यू स्यात् । हरी ॥

३३ **ए ओ जसि** । इदुदन्तस्य जसि ए ओ स्यात् । हरयः ॥ हरिम् हरी हरीन् ।

३४ टा नाऽस्त्रियाम् । इदुदन्तात् टा ना स्यात्, न स्त्रियाम् । हरिणा हरिभ्याम् हरिभिः ।

३५ ङिति । इदुदन्तस्य ङिति ए ओ स्यात् । हरये हरिभ्याम् हरिभ्यः ॥

३६ ङस्य । एदोद्भ्यां ङसि–ङसोरस्य लोपः स्यात् । हरेः हरिभ्याम् हरिभ्यः । हरेः हर्योः हरीणाम् ॥

३७ ङेरौ डित् । इदुद्भ्यां ङेरौः स्यात्, स च डित् ॥

३८ डिति टेः । डिति टेर्लोपः स्यात् । हरौ हर्योः हरिषु ॥

३९ धौ । इदुदन्तस्य धौ ए ओ स्यात् । हे हरे हे हरी हे हरयः ।

एवं गिरि–कवि–रव्यादयः । उकारान्ता विष्णु-वायु-भान्वादयोऽप्येवं ज्ञेयाः ॥

इकारान्तस्यापि सखिशब्दस्य भेदः—

४० सेर्डाऽधेः । सखिशब्दात् तदन्ताच्च सेर्डा स्यादधौ । सखा ॥

४१ ऐ सख्युः । सखिशब्दस्य तदन्तस्य चैकारादेशः स्यात्, अधिषु पञ्चसु । सखायौ सखायः । सखायम् सखायौ सखीन् ॥

४२ सखि–पत्योरीक् । [सखि–पत्योरीक् ] स्यात् टा–ङे–ङिसु परतः । सख्या सखिभ्याम् सखिभिः । सख्ये सखिभ्याम् सखिभ्यः ॥

४३ ऋङ्क् ङेः । सखि—पत्योर्ऋङ्क् स्यात्, ङसि—ङसोः ॥

४४ ऋतो ङ उः । ऋदन्तात् ङसि–ङसोरस्य उः स्यात्, स च डित् । सख्युः सखिभ्याम् सखिभ्यः । सख्युः सख्योः सखीनाम् । सख्यौ सख्योः सखिषु । हे सखे हे सखायौ हे सखायः ॥ तदन्तात् तु परमसखा परमसखायौ परमसखायः ।

पत्या । पत्ये । पत्युः २ । पत्यौ । शेषं हरिवत् । पतिः समासे हरिवत् । भूपतये ।

द्विशब्दो नित्यं द्विवचनान्तः—

४५ त्यदादेष्टेरः स्यादौ । स्पष्टम् । द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ ॥

त्रिशब्दो नित्यं बहुवचनान्तः—त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः २ ।

४६ त्रेरयङ् । [त्रेरयङ्] स्यात् नामि । त्रयाणाम् । त्रिषु ॥

कतिशब्दोऽपि नित्यं बहुवचनान्तः—

४७ इतेः । इत्यन्तात् जस्—शसोर्लुक् स्यात् । कति २ । कतिभिः । कतिभ्यः २ । कतीनाम् । कतिषु ।

सुश्रीः ।

४८ य्वोर्धातोरियुवौ स्वरे । धातोरिवर्णोवर्णयोरियुवौ स्यातान्, स्यादौ स्वरे । सुश्रियौ सुश्रियः । सुश्रियम् सुश्रियौ सुश्रियः । सुश्रिया सुश्रीभ्याम् सुश्रीभिः इत्यादि । एवं सुधी—यवक्रयादयः ॥

# अथ स्वरान्ताः स्त्रीलिङ्गाः ।

आकारान्तो गङ्गाशब्दः—

६१ आपः । आबन्तात् सेर्लोपः स्यात् । गङ्गा ॥

६२ औरी । आबन्तादौ ईर्भवति । गङ्गे गङ्गाः ॥

६३ टौसोरे । आबन्तस्य टौसोरेत्वं स्यात् । गङ्गया गङ्गाभ्याम् गङ्गाभिः ॥

६४ ङितां यट् । आबन्तात् ङितां यट् स्यात् । गङ्गायै गङ्गाभ्याम् गङ्गाभ्यः । गङ्गायाः गङ्गाभ्याम् गङ्गाभ्यः । गङ्गायाः गङ्गयोः गङ्गानाम् ॥

६५ आम् ङेः । आबन्तात् ङेराम् स्यात् । गङ्गायाम् गङ्गयोः गङ्गासु ॥

६६ धिरिः । आबन्ताद् धिरिः स्यात् । हे गङ्गे हे गङ्गे हे गङ्गाः ॥

एवं मेधा–श्रद्धा–दुर्गाऽऽदयः ।

६७ यटोऽच्च । आबन्तात् सर्वाऽऽदेर्यटः सुट् स्यात्, पूर्वस्य ह्रस्वः । सर्वस्यै । सर्वस्याः २ । सर्वासाम् । सर्वस्याम् । शेषं गङ्गावत् । एवं विश्वाऽऽदय आबन्ताः ॥

बुद्धिः बुद्धी बुद्धयः । बुद्धिम् बुद्धी बुद्धीः । बुद्धया बुद्धिभ्याम् बुद्धिभिः ।

६८ **इदुद्भ्याम्** । स्त्रियामिदुद्भ्यां ङितामट् वा स्यात् । बुद्ध्यै, बुद्धये । बुद्ध्याः, बुद्धेः २ । बुद्धीनाम् ॥

६९ **स्त्रियां य्वोः** । स्त्रियामिवर्णोवर्णान्तात् ङेराम् स्यात् । बुद्ध्याम् , बुद्धौ । शेषं हरिवत् ।

एवं मति–धृति–कान्ति–कीर्त्यादयः ।उकारान्ता धेनु-रज्जु-द(त)न्वादयोऽप्येवम् ॥

७० **त्रि–चतुरोः स्त्रियां तिसृ–चतसृवत्** । स्त्रियां त्रि–चतुर्शब्दयोस्तिसृ–चतसृ आदेशौ स्याताम्, स्यादौ । 'ऋ ॠवच्च' तेन अर्–आर्–उकारा न स्युः। तिस्रः २ । तिसृभिः । तिसृभ्यः२।

७१ **तिसृ–चतस्रोर्नामि दीर्घो न** इति तिसृणाम्। तिसृषु।

ईकारान्तो नदीशब्दः—

७२ **हसेपः सेर्लोपः** । हसान्तादीप्प्रत्ययान्ताच्च सेर्लोपः स्यात् । नदी नद्यौ नद्यः ॥

७३ **ङितामट्** । स्त्रियामीदूदन्तात् ङितामट् स्यात् । नद्यै । नद्याः २ । नदीनाम् । नद्याम् ॥

७४ **धौ ह्रस्वः** । अधातोरीदूतोः स्त्रियां धौ ह्रस्वः स्यात् । हे नदि । शेषमविशेषः ॥

एवं गौरी–कुमारी–ब्राह्मण्यादयः । लक्ष्मीः ईप्प्रत्ययान्तत्वाभावात् सेर्लोपो न। लक्ष्म्यौ लक्ष्म्यः । लक्ष्मीणाम् । शेषं नदीवत् । स्त्री ।

७५ स्त्री-भ्रुवोः । स्त्रीशब्दस्य भ्रूशब्दस्य च इयुवौ स्याताम्, स्वरादिस्यादौ । स्त्रियौ स्त्रियः ।

७६ वाऽम्-शसि । अमि शसि च स्त्रीशब्दस्य वा इय् स्यात् । स्त्रियम्, स्त्रीम् स्त्रियौ स्त्रियः, स्त्रीः ॥ स्त्रियै । स्त्रियाः । स्त्रीणाम् । स्त्रियाम । हे स्त्रि । इत्यादि ।

श्रीः श्रियौ श्रियः ।

७७ वेयुवः । इयुवन्ताद् वा ङितामट् [ स्यात् ] स्त्रियाम् । स्त्रियास्तु नित्यम् । श्रियै, श्रिये । श्रियाः, श्रियः २ ।

७८ धातोरियुवन्तादामो नुड् वा स्त्रियाम् । श्रीणाम्, श्रियाम् । श्रियि, श्रियाम ॥

एवं धी-ह्रीप्रभृतयः । ऊकारान्ता भ्रूप्रभृतयोऽप्येवम् । वधूः वध्वौ वध्वः । हे वधु ॥ माता पितृवत् । स्वसा कर्तृवत् । शसि मातॄः, स्वसॄः । राः पुंवत् । गौः पुंवत् । नौर्ग्लौवत् ॥

इति स्वरान्ताः स्त्रीलिङ्गाः ।

---

# अथ स्वरान्ता नपुंसकलिङ्गाः ।

अकारान्तः कुलशब्दः—

७९ अतोऽम् । अदन्तात् क्लीबात् स्यमोरम् स्यात् । कुलम् ॥

८० ईमौ । क्लीबात् पर औ ईः स्यात् । कुले ॥

८१ जस्–शसोः शिः । क्लीबात् जस्–शसोः शिः स्यात् ॥

८२ नुमयमः । क्लीबस्य नुम् स्यात् शौ, यमान्तस्य न ॥

८३ नोपधायाः । नान्तस्योपधाया दीर्घः स्यात्, शौ, पञ्चस्वधिषु नामि च ईति न । कुलानि । पुनः कुलं कुले कुलानि । शेषं देववत् ॥

मूल–फल–पत्र–पुष्पादयोऽप्येवम् ।

८४ श्त्वन्यादेः । अन्यादेः क्लीबात् स्यमोः श्तुभवति । अन्यत्, अन्यद् अन्ये अन्यानि ॥

८५ अन्यादेर्धेर्लोपो न । हे अन्यत् । शेषं सर्ववत् ॥

८६ नपुंसकस्य [ ह्रस्वः ] । नपुंसकस्य ह्रस्वः स्यात्, स्यादौ । शेषं कुलवत् ॥

इकारान्तोऽस्थिशब्दः—

८७ नपुंसकात् स्यमोर्लुक् । स्पष्टम् । अस्थि ॥

८८ नामिनः स्वरे । नाम्यन्तस्य क्लीबस्य नुम् स्यात्, स्यादौ स्वरे । अस्थिनी अस्थीनि । पुनः ॥

८९ अच्चास्थनां टाऽऽदौ । अस्थ्यादीनां नुम् स्यात्, इकारस्य चाकारः, टादौ स्वरे ॥

९० अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ । अन्नन्तस्योपधाया लोपः स्यात्, शसादौ [ स्वरे ] मकार—वकारान्तसंयोगान्न । अस्थ्ना । अस्थ्ने । अस्थ्नः २ । अस्थ्नाम् ॥

९१ वेङ्योः । अन्नन्तस्योपधाया वा लोपः स्यात्, ईङि-त्येतयोः परयोः । वकार-मकारान्तसंयोगान्न । अस्थ्नि, अस्थनि ॥

९२ य्वॄणां नपुंसके धौ गुणो वा । हे अस्थे, हे अस्थि ॥

एवं दधि—सक्थि—अक्षिशब्दाः । दध्ना दधिभ्यां दधिभिः । सक्थ्ना । अक्ष्णा ॥

इकारान्तो वारिशब्दः— वारि वारिणी वारीणि २ । वारिणा ॥ वारिषु ॥ ग्रामणि ग्रामणिनी ग्रामणीनि २ ।

९३ टाऽऽदावुक्तपुंस्कं पुंवद् वा । नाम्यन्तं नपुंसकलिङ्गं टाऽऽदौ स्वरे पुंवद् वा स्यात् । ग्रामण्या, ग्रामणिना ॥ स्वरादौ सर्वत्राप्येवम् ।

उकारान्तो मधुशब्दः—मधु मधुनी मधूनि । पुनरपि । मधुना मधुभ्याम् मधुभिः इत्यादि ।

सुलु सुलुनी सुलूनि २ । सुल्वा, सुलुना । सुल्वे, सुलुने इत्यादि ।

ऋकारान्तो धातृशब्दः—धातृ धातृणी धातॄणि २ । धात्रा, धातृणा । धात्रे, धातृणे इत्यादि । एवं ज्ञातृ—कर्त्रादयः ।

ऐकारान्तोऽतिरैशब्दः—'सन्ध्यक्षराणां ह्रस्वादेशे इदुतौ स्तः ।' अतिरि अतिरिणी अतिरीणि २ । अतिराया, अतिरिणा अतिराभ्याम् अतिराभिः इत्यादि ।

प्रद्यु प्रद्युनी प्रद्यूनि २ । प्रद्युना, प्रद्यवा प्रद्युभ्याम् प्रद्युभिः इत्यादि ।

अतिनु अतिनुनी अतिनूनि २ । अतिनुना, अतिनवा अतिनुभ्याम् अतिनुभिः इत्यादि ।

इति स्वरान्ता नपुंसकलिङ्गाः ।

---

## अथ हसान्ताः पुंलिङ्गाः ।

हकारान्तोऽनडुह्शब्दः—

९४ **अनडुहश्च** । अनडुह आमागमः स्यात्, पुंसि पञ्चसु शौ च ईपि वा ।

९५ **सावनडुहः** । अनडुहः सौ परे नुम् स्यात् ॥

९६ **संयोगान्तस्य लोपः** । [संयोगान्तस्य लोपः] स्यात् स्यादौ रसे पदान्ते च । 'रात् सस्यैव ।' [रेफादुत्तरस्य सकारस्यैव लोपोऽन्यस्य न स्यात् ।] अनड्वान् अनड्वाहौ अनड्वाहः । अनड्वाहम् अनड्वाहौ अनडुहः । अनडुहा ।

९७ वसां रसे । वसु–स्रंसु–ध्वंसु–भ्रंसु–अनडुहां दः स्यात्, रसे पदान्ते च । अनडुद्भ्याम् अनडुद्भिः इत्यादि ॥

९८ धावम् । चतुरनडुहोर्धावम् स्यात् । हे अनड्वन् ॥

९९ दादेर्घः । दादेर्हस्य घः स्याद्, धातोर्झसे, नाम्नश्च रसे पदान्ते च ॥

१०० आदिजबानां झभान्तस्य झभाः स्ध्वोः । झभान्तस्य धातोः पूर्वजबानां झभाः स्युः, सकारे ध्वशब्दे च भकारे पदान्ते च ॥

१०१ वाऽवसाने । झसानां जबाः स्युः, चपा वा । धुक्, धुग् दुहौ दुहः । दुहा धुग्भ्याम् । धुक्षु ॥

१०२ हो ढः । हस्य ढः स्यात्, धातोर्झसे नाम्नश्च रसे पदान्ते च । लिट्, लिड् लिहौ लिहः । लिट्सु, लिट्त्सु ॥

१०३ द्रुहादीनां वा घत्वम् । [ द्रुहादीनां धातूनां घत्व–ढत्वे वा स्तः, रसे पदान्ते च धातोर्झसे ] ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् द्रुहौ द्रुहः । द्रुहा ध्रुग्भ्याम्, ध्रुड्भ्याम् । [ द्रुहे । द्रुहः ] ध्रुक्षु, ध्रुट्सु ॥

विश्ववाट्, विश्ववाड् विश्ववाहौ विश्ववाहः ।

१०४ वाहो वौ शसादौ स्वरे । वाहो वाशब्दस्यौ स्यात्, शसादौ स्वरे ।

विश्वौहः । विश्वौहा विश्ववाड्भ्याम् विश्ववाड्भिः इत्यादि ॥

१०५ दिव औ । दिव औः स्यात्, सौ । सुद्यौः सुदिवौ सुदिवः । सुदिवा ॥

१०६ उ रसे । दिव उः स्यात्, रसे पदान्ते च । सुद्युभ्याम् सुद्युभिः इत्यादि ॥

चतुर्शब्दो नित्यं बहुवचनान्तः—

१०७ **चतुराम् शौ च** । चतुर्शब्दस्यामागमः स्यात्, पञ्चसु शौ च । चत्वारः । चतुरः । चतुर्भिः । चतुर्भ्यः २ ।

१०८ **रः सङ्ख्यायाः** । रेफान्तसङ्ख्याशब्दादामो नुट् स्यात् । चतुर्णाम् । चतुर्षु ॥ स्वाभाविकरेफस्य विसर्गो न ।

१०९ **मो नो धातोः** । मान्तस्य धातोर्मस्य नः स्यात्, झसे पदान्ते च । वमयोश्चासिद्धत्वान्नलोपो न । प्रशान् प्रशामौ प्रशामः । प्रशामा प्रशान्भ्याम् । प्रशान्सु ॥

कः कौ के । सर्ववत् ।

११० **इदमोऽयं पुंसि** । इदमः पुंसि अयं स्यात्, सौ । अयम् ॥

१११ **दस्य मः** । त्यदादेर्दस्य मः स्यात्, स्यादौ । इमौ इमे । इमम् इमौ इमान् ॥

११२ **अनः टौसोः** । इदमोऽनः स्यात्, टौसोः । अनेन ॥

११३ **स्भ्यः** । इदमः सकारे भकारे च कृत्स्नस्य अः स्यात् । आभ्याम् ॥

११४ **भिस् भिस्** । इदमदसोर्भिस् भिसेव स्यात्, न

त्वैकारः । एभिः ॥ अस्मै । अस्मात् । अस्य । अनयोः २ । एषाम् । अस्मिन् एषु । त्यदादीनां सम्बोधनाभावः ।

११५ इदमेतदोरन्वादेशे द्वितीया–टौस्स्वेनद् वा । उक्तस्य पुनर्भाषणमन्वादेशः । एनम् एनौ एनान् । अनेन, एनेन । अनयोः, एनयोः ॥

११६ नाम्नो नो लोपशधौ । नान्तस्य नाम्नो नस्य लोपश् स्यात्, रसे पदान्ते चाधौ । राजा राजानौ राजानः । राजानं राजानौ । राजन्+शस् [ इति स्थिते ] अल्लोपे 'स्तोः श्चुभिः श्चुः' 'ज–ञोर्ज्ञः ।' [ जकार–ञकारयोर्योगे ज्ञो भवति राज्ञः । ] राज्ञा राजभ्याम् राजभिः । 'नस्य लोपशि न विभक्तिकार्यम्' तेन 'अद् भिः' 'ऽभ्यः' इत्यात्वैस्त्वे न स्तः। राज्ञे । राज्ञः २ । 'वेङ्योः' राज्ञि, राजनि राजसु । हे राजन् ।

एवं वृषादयः । यज्वनः । यज्वना । आत्मनः । आत्मना । प्रतिदिवा । शसि अल्लोपे–

११७ य्वोर्वि हसे । धातोरिदुतोर्दीर्घः स्यात्, रेफ–वकारसंयोगे पदान्ते च । प्रतिदीव्नः। प्रतिदीव्ना प्रतिदिवभ्याम् इत्यादि॥

११८ श्वादे [वे उः] । श्वादेर्वस्योत्वं स्यात्,शसादौ स्वरे ईकारे ईपि च । शुनः । शुना श्वभ्याम् इत्यादि ॥

नकारान्तपथिन्शब्दस्य विशेषः—

११९ इतोऽत् पञ्चसु । पथिन्–मथिन्–ऋभुक्षिन्शब्दानामिकारस्याकारः स्यात्, पुंसि पञ्चसु शौ च ॥

**१२० थो नुट्** । पथि–मथोस्थस्य नुट् स्यात्, पुंसि पञ्चसु शौ च ।

**१२१ आ सौ** । पथि–मथि–ऋभुक्षां टेरात्वं स्यात्, सौ । पन्थाः पन्थानौ पन्थानः ॥

**१२२ पथां टेः** । पथि–मथि–ऋभुक्षां टेर्लोपः स्यात्, शसादौ स्वरे, ईकारे ईपि च । पथः । पथा पथिभ्याम् । पथिषु ॥ एवं मन्थाः । ऋभुक्षाः ॥

**१२३ इनां शौ सौ** । इन् हन् पूषन् अर्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घः स्यात्, नान्यत्र । दण्डी दण्डिनौ दण्डिनः। दण्डिनम् दण्डिनौ दण्डिनः । दण्डिना इत्यादि । एवं यशस्विन्–वाग्मिन्–प्रभृतयः ॥

वृत्रहा वृत्रहणौ वृत्रहणः । शसि अल्लोपे—

**१२४ हनो घ्ने** । हन्तेर्हस्य घः स्यात्, नकारे ञ्णिति च । घव्यवधाने णत्वं न । वृत्रघ्नः । वृत्रघ्ना वृत्रहभ्याम् इत्यादि । एवं पूषन्–अर्यमन्प्रभृतयः ॥

सङ्ख्याशब्दाः पञ्चन्प्रभृतयो बहुवचनान्तास्त्रिषु सरूपाः ।

**१२५ जस्–शसोर्लुक्** । षान्त–नान्तसङ्ख्याया जस्–शसोर्लुक् स्यात् । पञ्च २ ॥ पञ्चभिः । पञ्चभ्यः २ ।

**१२६ ष्णः** । षान्त–नान्तसङ्ख्यायाः परस्यामो नुट् स्यात् । पञ्चानाम् । पञ्चसु । एवं सप्तन्–नवन्–दशन्–प्रभृतयः ॥

अष्टन्शब्दस्य विशेषः—

१२७ अष्टनो डौ वा । अष्टनः परयोर्जस्-शसोर्वा डौ स्यात् । अष्टौ, अष्ट २ ।

१२८ वा सु । अष्टनः सकार-भकारादिस्यादौ वा आत्वं स्यात् । अष्टभिः, अष्टाभिः । अष्टभ्यः २ । अष्टानाम् । अष्टसु, अष्टासु ॥

१२९ छ-श-ष-राजादेः षः । छ-श-षान्तस्य राज्-यजादेश्च षः स्यात्, धातोर्झसे नाम्नश्च रसे पदान्ते च ।

१३० षो डः । षस्य डः स्यात्, धातोर्झसे नाम्नश्च रसे पदान्ते च । सम्राट्, सम्राड् । सम्राड्भ्याम् । सम्राट्सु ॥

यः यौ ये ।

१३१ स्तः । त्यदादेस्तस्य सः स्यात्, सौ । सः तौ ते । शेषं सर्ववत् । एषः एतौ एते ॥

१३२ चोः कुः । चोः कुः स्यात्, धातोर्झसे, नाम्नश्च रसे पदान्ते च । सुपक्, सुपग् । सुपग्भ्याम् । सुपचे । सुपचः । सुपचोः २ । सुपक्षु ॥

चस्य षत्वे निमित्ताभावेन सस्य सत्वे ।

१३३ स्कोराद्योश्च । संयोगादेः सस्य कस्य च लोपः स्यात्, धातोर्झसे, नाम्नश्च रसे पदान्ते च । वृक्षवृट्, वृक्षवृड् वृक्षवृश्चौ वृक्षवृश्च इत्यादि ॥

१३४ अञ्चेः पुंसि पञ्चसु नुम् । १३५ दिशाम् [कुः] । दिश्–स्पृशादीनां कुः स्यात्, स्यादौ रसे पदान्ते च । तिर्यङ् तिर्यञ्चौ तिर्यञ्चः ॥

१३६ तिरश्चादयो निपात्याः । शसादौ स्वरे तद्धित-यस्वरयोरीकारे ईपि च । तिरश्चः । तिरश्चा तिर्यग्भ्याम् । तिर्यक्षु । एवं प्रत्यङ् । प्रतीचा प्रत्यग्भ्याम् । प्रत्यक्षु । उदङ् । उदीचः । उदीचा उदग्भ्याम् । उदक्षु । सम्यङ् । समीचः । समीचा सम्यग्भ्याम् । सम्यक्षु ॥

१३७ त्रितो नुम् । उकारानुबन्धस्य ऋकारानुबन्धस्य च नुम् स्यात्, पुंसि पञ्चसु ।

१३८ न्सम्महतोऽधौ दीर्घः शौ च । न्सन्तस्यापूशब्दस्य महच्छब्दस्य च दीर्घः स्यात्, पुंसि पञ्चस्वधिषु शौ च । महान् महान्तौ महान्तः । महता महद्भ्याम् । महत्सु । हे महन् ॥

पचन् पचन्तौ पचन्तः । हे पचन् ।

१३९ शत्रन्तानां द्विरुक्तानां जक्षादीनां च न नुम् शौ वा । ददत् ददतः । एवं जक्षत् जाग्रत् दरिद्रत् चकासत् शासत् ।

सुदिक्, सुदिग् सुदिशौ सुदिशः । सुदिशा सुदिग्भ्याम् । सुदिक्षु । हे सुदिक्, सुदिग् ॥

षष्शब्दो नित्यं बहुवचनान्तस्त्रिषु सरूपः । षट्, षड् । षड्भिः । षड्भ्यः ।

१४० ड: णः । डस्य णः स्यान्नामि । षण्णाम् ॥ षट्सु ।

१४१ दोषां [रः] । दोषादीनां रः स्याद्, रसे पदान्ते च । दोः दोषौ दोषः । दोषम् ।

१४२ शसादौ वा दोषन् । दोष्णः, दोषः । दोषा, दोष्णा दोषभ्याम्, दोर्भ्याम् । दोषसु, दोःसु ‘ विसर्गानुस्वार-व्यवधानेऽपि सस्य षत्वं वाच्यम ’ दोष्षु ।

विद्वान् विद्वांसौ विद्वांसः ।

१४३ वसोर्व उः । वसोर्वस्य उः स्यात्, शसादौ स्वरे, तद्धितय-स्वरयोर्मतावीपीकारे च । विदुषः । विदुषा विद्वद्-भ्याम् । विद्वत्सु । हे विद्वन् ॥

१४४ पुंसोऽसुङ् । पुंसोऽसुङ् आदेशः स्यात्, पुंसि पञ्चसु शौ च । पुमान् पुमांसौ पुमांसः । पुंसा पुम्भ्याम् । पुंसु । हे पुमन् ॥

१४५ अत्वसोः सौ । अत्वन्तस्याधात्वसन्तस्य चोपधाया दीर्घः स्यात्, सावधौ । वेधाः वेधसौ वेधसः । वेधसा वेधोभ्याम् । वेधस्सु । हे वेधः ॥

१४६ उशनसाम् । उशनस्–पुरुदंशस्–अनेहसां सेरधेर्डा स्यात् । उशना उशनसौ उशनसः । उशनोभ्याम् । उशनस्सु ॥ ‘ उशनसो धौ नान्तता अदन्तता वा वाच्या ’ हे उशनन्, हे उशन, हे उशनः हे उशनसौ हे उशनसः ॥

१४७ अदसो दस्य सः सौ । अदसो दस्य सौ परे सत्वं स्यात् ॥

१४८ सेरौ । अदसः सेरौ स्यात् । असौ ॥

१४९ मादू । अदसोऽमात् परस्य उश्च ऊश्च स्यात् । ह्रस्वस्य ह्रस्वः, दीर्घस्य दीर्घः । अमू ।

१५० एरी बहुत्वे । अदस एकारस्य ईः स्यात्, बहुत्वे । अमी । अमुम् अमू अमून् । अमुना अमूभ्याम् अमीभिः । अमुष्मै । अमुष्मात् । अमुष्य । अमुयोः २ । अमीषाम् । अमुष्मिन् अमीषु ॥

इति हसान्ताः पुंलिङ्गाः ।

---

## अथ हसान्ताः स्त्रीलिङ्गाः ।

तत्र हकारान्त उपानह्शब्दः—

१५१ नहो धः । नहो हस्य धः स्यात्, धातोर्झसे नाम्नश्च रसे पदान्ते च । उपानत्, उपानद् उपानहौ उपानहः । उपानहा उपानद्भ्याम् । उपानत्सु ॥

चतस्रः २ । चतसृभिः । चतसृभ्यः २ । चतसृणाम् । चतसृषु ।

१५२ इयं स्त्रियाम् । इदम् स्त्रियामियं स्यात्, सौ । इयम् इमे इमाः । अनया आभ्याम् आभिः । अस्याः २ अनयोः आसाम् । अस्याम् अनयोः आसु ।

स्या त्ये त्याः । एवं सा ते ताः । या ये याः । एषा एते एताः ॥

अप्शब्दो नित्यं बहुवचनान्तः—आपः । अपः ।

१५३ भि दपाम् । अप्शब्दस्य दत्वं स्यात्, भादिविभक्तौ । अद्भिः । अद्भ्यः २ । अपाम् । अप्सु ।

आशीः आशिषौ आशिषः । आशिषा आशीर्भ्याम् । आशीःषु ।

असौ अमू अमूः । अमुम् अमू । अमुया अमूभ्याम् अमूभिः । अमुष्यै । अमुष्याः २ । अमुयोः अमूषाम् । अमुष्याम् अमुयोः अमूषु ।

इति हसान्ताः स्त्रीलिङ्गाः ।

---

## अथ हसान्ता नपुंसकलिङ्गाः ।

स्वनडुत्, स्वनडुद् स्वनडुही स्वनड्वांहि । पुनः । शेषं पुंवत् ॥
वाः वारी वारि २ । वारा वार्भ्याम् । वार्षु ॥
इदम् इमे इमानि । पुनः । शेषं पुंवत् ॥
किं के कानि । शेषं पुंवत् ।

१५४ अह्नः । अहन्शब्दस्य सः स्यात्, रसे पदान्ते च । अहः अह्नी, अहनी अहानि । पुनः अह्ना अहोभ्याम् । अहस्सु ।

कर्म कर्मणी कर्माणि २ । 'घौ नपुंसकानां नस्य लोपो वा' त्यत्, त्यद् त्ये त्यानि । तत्, तद् ते तानि । यत्, यद् ये यानि । एतत्, एतद् एते एतानि । शेषं पुंवत् ॥

१५५ वाऽऽदीपोः शतुः । अवर्णान्तात् शतुर्वा नुम् [ स्यात् ], ईकारे ईपि च । तुदती, तुदन्ती । तुदन्ति २ । शेषं पुंवत् ॥

१५६ अप्–ययोरान्नित्यम् । अप्प्रत्यय–यप्रत्ययसम्बन्धिनोऽवर्णान्ताच्छतुर्नुम् नित्यं स्यादीकारे ईपि च । पचत् पचन्ती पचन्ति । दीव्यत् दीव्यन्ती दीव्यन्ति । जगत्, जगद् जगती जगन्ति । वचः वचसी वचांसि । अदः अमू अमूनि । पुनरपि । शेषं पुंवत् ॥

इति हसान्ता नपुंसकलिङ्गाः ।

## अथ युष्मदस्मदी ।

१५७ त्वमहं सिना । सिसहितयोर्युष्मदस्मदोस्त्वमहमित्यादेशौ स्तः । त्वम् । अहम् ॥

१५८ युवावौ द्विवचने । युवावादेशौ स्तः ॥

१५९ आमौ । ताभ्यां पर औ आम् स्यात् । युवाम् । आवाम् ॥

१६० यूयं वयं जसा । जसा सहितयोस्तयोर्यूयं वयमित्यादेशौ स्तः । यूयम् । वयम् ॥

१६१ त्वन्मदेकत्वे । तयोस्त्वन्मदौ स्त एकत्वे ॥

१६२ आऽम्–स्–भौ । तयोष्टेरात्वं स्यात्, अमि सकारे भिसि च । त्वाम् । माम् । युवाम् । आवाम् । युष्मान् । अस्मान् ॥

१६३ ए टा–ङ्योः । तयोष्टेरेत्वं स्यात्, टा–ङ्योः । त्वया । मया । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ॥

१६४ तुभ्यं मह्यं ङ्या । ङेसहितयोस्तयोस्तुभ्यं मह्यमित्यादेशौ स्तः । तुभ्यम् । मह्यम् । युवाभ्याम् । आवाभ्याम् ॥

१६५ भ्यस् श्भ्यम् । ताभ्यां परो भ्यस् श्भ्यं स्यात् । युष्मभ्यम् । अस्मभ्यम् ॥

१६६ ङसि–भ्यसोः श्तुः । स्पष्टम् । त्वत् । मत् । युवाभ्याम् । आवाभ्याम् । युष्मत् । अस्मत् ॥

१६७ तव मम ङसा । स्पष्टम् । तव । मम । युवयोः । आवयोः ॥

१६८ सामाकम् । ताभ्यां परः साम आकं स्यात् । युष्माकम् । अस्माकम् । त्वयि । मयि युवयोः । आवयोः । युष्मासु । अस्मासु ॥

१६९ युष्मदस्मदोः षष्ठी-चतुर्थी-द्वितीयाभिस्ते मे वां नौ वस्-नसौ । षष्ठी-चतुर्थी-द्वितीयासहितयोर्युष्मदस्मदोरेकत्वे ते मे, द्वित्वे वाम् नौ, बहुत्वे वस्-नसौ इत्यादेशौ स्तः ॥

१७० त्वा-माऽमा । अमा सहितयोस्तयोस्त्वा-माऽऽदेशौस्तः ॥

श्रीशस्त्वाऽवतु माऽपीह दत्तात् ते मेऽपि शर्म सः ।
स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥१॥
सुखं वां नौ ददात्वीशः पतिर्वामपि नौ विभुः ।
सोऽव्याद् वो नः शिवं वो नो दद्यात् सेव्योऽत्र वः स नः ॥२॥

१७१ नादौ । वाक्यादौ पादादौ नैते आदेशाः स्युः । त्वां पातु । वेदैरशेषैः स वेद्योऽस्मान् विभुः सर्वदाऽवतु ॥

१७२ निरुपपदात् । सम्बोधनात् परयो [युष्मदस्मदो] नैते स्युः । देवास्मान् पाहि सर्वदा ॥

१७३ चादिभिश्च । च वा ह अह एव एभिर्योगे नैते ।

आवयोर्युवयोश्चेशो वेशो हेशस्तथैव च ।
अहेश आवयोरेव हरिर्मामेव रक्षतु ॥ १ ॥

इति युष्मदस्मत्प्रक्रिया ।

---

# अथाऽव्ययानि ।

१ **चादिर्निपातः** । च वा ह अह एव नूनं पृथक् शश्वत् युगपत् भूयस् हन्त विना स्वस्ति अग्नि नक्तं मृषा मिथस् अथ अथो ह्यस् श्वस् उच्चैस् नीचैस् शनैस् ऋते आरात् दिवा सायं चिरं मनाक् ईषत् जोषम् । तूष्णीम् इव हि ( बहिस् ) तिरस् अन्तरा सहसा अलम् वौषट् वषट् पुरा प्रायस् मुहुः सार्धम् साकम् नमस् हिरुक् धिक् मा प्रातर् पुनर् स्वाहा यावत् तावत् तथाहि खलु किञ्च अङ्ग हे भोः अयि रे द्राक् दिक् इत्यादि ॥

२ **तत्रादयो निपात्या विभक्त्याद्यर्थेषु** । तत्र यत्र अत्र कुत्र क्व तथा यथा कथम् इत्थम् ततः यतः इतः कुतः अतः सर्वतः पुरः पुरस्तात् उपरि उपरिष्टात् अधः अधस्तात् सद्यः अद्य अधुना इदानीम् तदा यदा कदा सर्वदा अन्यदा सम्प्रति सपदि झटिति तूर्णम् आशु परुत् परारि पूर्वेद्युः परेद्युः अन्येद्युः यर्हि तर्हि कर्हि एतर्हि ॥

३ **प्रादिक उपसर्गा** । प्र परा अप सम् अनु अव निस् निर् दुस् दुर् अभि वि अधि सु उत् नि प्रति अति परि अपि उप आङ् श्रत् अन्तर् आविर् ॥

४ **प्राग् धातोः** । उपसर्गाः प्राक् स्युः ॥

५ **तदव्ययम्** । निपाता उपसर्गाश्च अव्ययसंज्ञाः स्युः ॥

६ क्त्वाद्यन्तं च । क्त्वा क्यप् तुम् णम् धा शस् च्वि वत् कृत्वस् सु आम् इत्याद्यन्तमव्ययसंज्ञं स्यात् ॥

७ अव्ययाद् विभक्तेर्लुक् । स्पष्टम् ॥

८ अवाप्योरुपसर्गयोरल्लोपो वा वक्तव्यः । अपिधानम्, पिधानम् । अवगाह्यम्, वगाह्यम् ॥

[ ९ आहि च दूरे । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि वसन्ति चाण्डालाः ॥

१० तदधीन–कार्त्स्न्ययोर्वा सात् । राज्ञोऽधीनं राजसात् । सर्वं भस्म इति भस्मसात् ॥

११ ऊर्युररी अङ्गीकरणे । निपात्यौ । [ ऊरीकृत्य ] उररीकृत्य ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ ]

इत्यव्ययानि ॥

## अथ स्त्रीप्रत्ययाः ।

१ आबतः स्त्रियाम् । अकारान्तान्नाम्न आप् स्यात्, स्त्रियाम् । सर्वा । माया ॥

२ अजादेश्च । अजा । अश्वा ॥

३ काप्यतः । कापि परे पूर्वस्यात इत् स्यात् । कारिका । पाचिका । क्वचिन्न । क्षिपका ॥

४ ह्रस्वो वा । कापि परे तरादौ च पूर्वस्य ह्रस्वो वा स्यात्, सन्ध्यक्षरं वर्जयित्वा । गङ्गका, गङ्गाका, गङ्गिका । श्रेयसितरा, श्रेयसीतरा । सन्ध्यक्षरवर्जनात् गोका । नौका ॥

५ न्नण ईप् । नकारान्तादृकारान्तादणन्ताच्च स्त्रियामीप् स्यात् । दण्डिनी । कर्त्री । औपगवी ॥

६ षट्वितः । षकार–टकारोकार–ऋकारेतः स्त्रियामीप् स्यात् । वराकी । कुरुचरी । गोमती । पचन्ती ॥

७ नदादेः । नदादेः स्त्रियामीप् स्यात् । नदी । गौरी ॥

८ अनन्त्यवयोवाचिनः । अदन्तात् स्त्रियामीप् स्यात् । कुमारी । तरुणी ॥

९ पुंयोगे च । पुंयोगेऽदन्तात् स्त्रियामीप् स्यात् । शूद्री । गणकी । क्वचिन्न गोपालिका ॥

१० जातेरयोपधात् । जातिवाचिनोऽयकारोपधाददन्तात्

स्त्रियामीप् स्यात् । महिषी । हंसी । क्वचिन्न बलाका । क्वचिद् योपधादपि मनुषी ॥

११ स्वाङ्गाद् वा । स्वाङ्गवाचिनोऽसंयोगोपधात् स्त्रियामीप् वा स्यात् । सुमुखी, सुमुखा ॥

१२ वोर्गुणात् । उदन्ताद् गुणवाचिनो वा स्त्रियामीप् स्यात् । पट्वी, पटुः ॥

१३ कृदिकारादक्तेरीप् वा । रात्री, रात्रिः । अक्तेरिति किम् ? मतिः । भूतिः ॥

१४ ऐ च मन्वादेः । मन्वादीनाम् ऐः स्यात्, ईप् च स्त्रियाम् । मनायी । औरपि मनावी ॥

१५ पत्न्यादयो निपात्याः । पत्नी । सपत्नी । सखी । प्राची । एवमन्येऽपि ॥

१६ इन्द्रादेरानीप् । इन्द्रादेर्गणाद् आनीप् स्यात्, स्त्रियां पुंयोगे । इन्द्राणी । भवानी इत्यादि ॥

१७ उत ऊः । उदन्तादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूप्रत्ययः स्यात् । कुरूः । ऊरुशब्दादपि करभोरूः ॥

इति स्त्रीप्रत्ययाः ।

# अथ तद्धितप्रकरणम् ।

१ अपत्येऽण् । नाम्नोऽपत्येऽर्थेऽण् स्यात् ॥

२ आदिस्वरस्य ञ्णिति वृद्धिः । स्वराणामादिस्वरस्य वृद्धिः, ञ्णिति तद्धिते ॥

३ यस्य लोपः । इवर्णावर्णयोर्लोपः स्यात्, तद्धितय-स्वरयोरोपि च । वासिष्ठः ॥

४ वोऽव् य-स्वरे । उवर्णस्य ओकारस्य चाव् स्यात्, यकारे स्वरे च । औपगवः । भार्गवः ॥

५ ऋ उरणि । सङ्ख्यापूर्वस्य मातृशब्दस्य ऋत उर् स्यादणि । षाण्मातुरः । द्वैमातुरः ॥

६ शिवादिभ्योऽपि । शैवः । गाङ्गः ॥

७ अत इञनृषेः । अनृषिशब्दादकारान्तादपत्येऽर्थे इञ् स्यात् । दैवदत्तिः । दाशरथिः । क्वचिद् ऋषिशब्दादपि । गार्गिः । औडुलोमिः ॥

८ ण्यायनणेयण्-णीया गर्ग-नडात्रि-स्त्री-पितृष्व-स्रादेः । गर्गादेर्ण्यः । नडादेरायनण् । अत्र्यादेः स्त्रीप्रत्ययान्ताच्च एयण् । पितृष्वस्रादेर्णीयः । एतेऽपत्यार्थेषु स्युः । गार्ग्यः । वात्स्यः । नाडायनः । वात्स्यायनः । आत्रेयः । गाङ्गेयः । पैतृष्वस्रीयः ॥

९ चटकादेरण् । चाटकैरः ॥

१० लुग् बहुत्वे क्वचित् । बहुत्वसङ्ख्यायां स्वप्यत्ये च प्रत्ययस्य लुक् । गर्गाः । वसिष्ठाः । चटकाः ॥

११ देवतेदमर्थे । देवतार्थे इदमर्थे चोक्ता वक्ष्यमाणाश्च प्रत्ययाः स्युः । ऐन्द्रम् । सौम्यम् । आग्नेयम् । अग्निषोमीयम् ॥

१२ क्वचिद् द्वयोः । पूर्वोत्तरपदाद्योः क्वचिद् वृद्धिः स्यात्, ञ्णिति । आग्निमारुतम् । सौहार्दम् ॥

१३ कल्याणादेरिनङ् । [ काल्याणिनेयः ।] सौभागिनेयः । सौभाग्यम् ॥

१४ णितो वा । उक्ताः प्रत्यया णितो वा स्युः । पित्र्यम् । गव्यम् । त्वदीयम् । यदीयम् ॥

१५ कारकात् क्रियायुक्ते । कारकादप्येते प्रत्ययाः स्युः, क्रियायुक्ते कर्तरि कर्मणि च । कौङ्कुमम् । माथुरः ॥

१६ केनेयेकाः । कारकात् क ईन इय इक इत्येते प्रत्ययाः स्युः, कर्तरि कर्मणि चोक्त–वक्ष्यमाणेष्वर्थेषु । ते च णितो वा । क्रमकः । पदकः । ग्रामीणः । कुलीनः । गार्गीयः । क्षत्रियः । इन्द्रियः । आक्षिकः । हालिकः । धार्मिकः । पौराणिकः ॥

१७ आख्याताव्यय–सर्वादेष्टेः प्रागकः । पचतकि । उच्चकैः । अयकम् ॥

**१८ त्य-तनौ** । भवाद्यर्थे त्य-तनौ स्तः । दाक्षिणात्यः । अमात्यः । ह्यस्तनः । श्वस्तनः । पुरातनः ॥

**१९ स्वार्थेऽपि** । उक्ता वक्ष्यमाणाश्च प्रत्ययाः स्वार्थेऽपि स्युः । प्राज्ञः । सामीप्यम् । दैवदत्तकः ॥

**२० अणीनयोर्युष्मदस्मदोर्युष्माकास्माकौ एकार्थयोस्तवक-ममकौ** । यौष्माकः । आस्माकः । यौष्माकीणः । आस्माकीनः । तावकः । मामकः । तावकीनः । मामकीनः ।

**२१ वत् तुल्ये** । सादृश्येऽर्थे वत्प्रत्ययः । चन्द्रवत् । ब्राह्मणवत् ॥

**२२ भावे त-त्व-यणः** । भावः शब्दप्रवृत्तिनिमित्तम् । तान्तं स्त्रियाम्, त्वान्तं क्लीबम्, यणन्तं प्रायः क्लीबम् । ब्राह्मणता, ब्राह्मणत्वम्, ब्राह्मण्यम् । कर्मण्यपि ब्राह्मण्यम्, राजन्यम्, स्तैन्यम् ॥

**२३ लोहितादिभ्य इमन् भावे** । स च डित् । लोहितिमा । अणिमा । महिमा । लघिमा ॥

**२४ भावेऽणपि** । लाघवम् । गौरवम् । यौवनम् ॥

**२५ ऋ र इमनि** । हसादेर्लघोः ऋकारस्य रः स्यादिमनि, इष्ठेयसोश्च । प्रथिमा । म्रदिमा ।

**२६ समूहेऽर्थेऽप्यणादयः** । मायूरम् । जनता । वास्या । वार्धकम् । कावचिकम् ॥

२७ हितेऽर्थेऽपि । आत्मनीनः । हविष्यम् ॥

२८ अस्त्यर्थे मतुः । गोमान् । श्रीमान् ॥

२९ अ-इकौ च मत्वर्थे । अर्शसः । वैजयन्तः ॥

३० इकस्त्वदन्तात् । धनिकः ॥

३१ मान्तोपधाद् वत्विनौ । मान्तान्मोपधादवर्णान्ताद-वर्णोपधाच्च वत्विनौ प्रत्ययौ स्तः । लक्ष्मीवान् । विद्यावान् । धनवान् । यशस्वान् ॥

३२ इनस्त्वदन्तात् । छत्री । दण्डी ॥

३३ तडिदादिभ्यश्च । तडित्वान् । विद्युत्वान् ॥

३४ यत्-तदेतदामा वतौ । यावान् । तावान् । एतावान् ॥

३५ इयत-कियदिति निपात्यौ । इयान् । कियान् ॥

३६ श्रद्धाऽऽदेर्लुः । श्रद्धालुः । दयालुः ॥

३७ प्रशंसायां रूपः । वैयाकरणरूपः ॥

३८ कुत्सायां पाशः । भिषक्पाशः ॥

३९ भूतपूर्वे चरट् । दृष्टचरः ॥

४० प्राचुर्य-विकार-प्राधान्यादिषु मयट् । अन्नमयः । मृन्मयः । स्त्रीमयः । अमृतमयः ।

४१ न सन्धिय्-वोर्युट् च । सन्धिजयोर्य-वयोर्युडागमः

स्यात् । यस्य इट्, वस्य उट् । पश्चाद् वृद्धिः । वैयाकरणः । सौवश्वः ॥

४२ इतो जातार्थे । लज्जितः । फलितः ॥

४३ तर-तमेयस्विष्ठाः प्रकर्षे । स्पष्टम् । शुक्लतरः । शुक्लतमः ॥ ईयस्विष्ठौ डितौ । लघीयान् । लघिष्ठः ॥

४४ गरिष्ठादयो निपात्याः । गरिष्ठः, गरीयान्, गरिमा । प्रेष्ठः, प्रेयान्, प्रेमा । श्रेयान्, श्रेष्ठः । ज्यायान्, ज्येष्ठः । भूयिष्ठः, भूयान् ॥

४५ किमोऽव्ययादाख्याताच्च तर-तमयोराम् । किंतराम्, किंतमाम् । कुतस्तराम् । उच्चैस्तराम् उच्चैस्तमाम् । पचतितराम् । पठतितमाम् ॥

४६ प्रमाणे दघ्न-द्वयस्-मात्राः । जानुदघ्नम् । शिरोद्वयसम् । पुरुषमात्रम् ।

४७ निर्धारणे किम्-यत्-तद्भ्यो डतर-डतमौ । कतरः, कतमः । यतरः । ततरः ॥

४८ सङ्ख्येयविशेषावधारणे द्वि-त्रिभ्यां तीयः त्रेस्तृ च । द्वितीयः । तृतीयः ॥

४९ षट्-कति-कतिपय-चतुर्भ्यस्थट् । षष्ठः । कतिथः । कतिपयथः । चतुर्थः ॥

५० तुर्य-तुरीयौ निपात्यौ । तुर्यः । तुरीयः ॥

५१ पञ्चादेर्मट् । पञ्चमः । सप्तमः ॥

५२ एकादशादेर्डट् । एकादशः ।

५३ द्व्यष्टनोरात्वं सङ्ख्यायामुत्तरपदेऽनशीतौ । द्वादशः । अष्टादशः । त्रयोदशः । चतुर्दशः । पञ्चदशः । षोडशः । सप्तदशः ॥

५४ विंशत्यादेर्वा तमट् । विंशतितमः ।

५५ विंशतेस्तिलोपो डिति । विंशः । त्रिंशत्तमः । त्रिंशः ॥

५६ चत्वारिंशदादौ वाऽऽत्वम् । द्विचत्वारिंशत्तमः, द्वाचत्वारिंशत्तमः । अष्टचत्वारिंशत्तमः, अष्टाचत्वारिंशत्तमः । एवं पञ्चाशत्–षष्टि–सप्तति–नवतिषु । अशीतौ तु द्व्यशीतितमः ॥

५७ शतादेर्नित्यं तमट् । शततमः ॥

५८ सङ्ख्यायाः प्रकारे धा । द्विधा । पञ्चधा । षोढा ॥

५९ क्रियाया आवृत्तौ कृत्वस् । सप्तकृत्वः ॥

६० द्वि–त्रि–चतुर्भ्यः सुः । द्विः । त्रिः । चतुः ॥

६१ तयडयटौ सङ्ख्याया अवयवे । द्वितयम्, द्वयम् । चतुष्टयी, चतुष्टयम् ॥

६२ वीप्सायां पदं द्विः । वृक्षं वृक्षं सिञ्चति ॥

६३ शेषा निपात्याः कत्यादयः । कति । तति ॥

[ स्त्री–पुंसोर्नञ्–स्नञौ । स्त्रैणम् । पौंस्नम् ॥

व्यासादेः किः । व्यासस्यापत्यं वैयासकिः । वारुडकिः ॥

प्रज्ञादिभ्योऽण् । प्राज्ञः । आर्चः । श्राद्धः । वार्तः ॥

तुन्दि-वलि-वटिभ्यो भः । तुन्दिभः । वलिभः । वटिभः ॥

कृष्यादिभ्यो वलच् दीर्घश्च । कृपीवलः ॥

शृङ्ग-वृन्दाभ्यामारकच् । शृङ्गारकः । वृन्दारकः ॥

ऊर्णाऽहं-शुभंभ्यो युः । अस्त्यर्थे । ऊर्णायुः । अहंयुः । शुभंयुः ॥

अर्णः-केशयोर्वः । अर्णवः । केशवः ॥

लोमादिभ्यः शः । लोमशः । रोमशः ॥ ]

इति तद्धितप्रक्रिया ॥

---

## अथ कारकाणि ।

१ लिङ्गार्थे प्रथमा । नामार्थमात्रे प्रथमा विभक्तिः स्यात् । कृष्णः । श्रीः । ज्ञानम् ॥

२ आमन्त्रणे च । सम्बोधने च प्रथमा स्यात् । हरे ! प्रसीद ॥

३ शेषाः कार्ये कर्तृ-साधनयोर्दानपात्रे विश्लेषावधौ सम्बन्ध आधार-भावयोः । द्वितीयाद्या एष्वर्थेषु भवन्ति ।

४ कर्मणि द्वितीया । कटं कुरुते पटुः ॥

५ कर्तरि करणे च तृतीया । रामेण शरेण रावणो जघ्ने ॥

६ दानपात्रे चतुर्थी । वेदविदे गां ददौ ।

७ विश्लेषावधावपादानकारके पञ्चमी । भूभृतोऽवतरति नदी । ग्रामादायाति ॥

८ सम्बन्धे षष्ठी । राज्ञः पुरुषः ॥

९ आधारे सप्तमी । औपश्लेषिकम् १, सामीप्यम् २, अभिव्यापकम् ३, वैषयिकम् ४, नैमित्तिकम् ५, औपचारिकं ६, चेति । कटे आस्ते । वटे गावः शेरते । तिलेषु तैलम् । हृदि ब्रह्मामृतं परम् । धीरो युद्धे संनह्यते । अङ्गुल्यग्रे करिणां शतम् ॥

१० विना–सह–नम–ऋते–निर्धारण–स्वाम्यादिभिश्च । एतैर्योगेऽपि द्वितीयाऽऽद्या विभक्तयः स्युः । विना धर्ममफलं जन्म । एवमन्तरेणान्तरा–निकषादियोगेऽपि । [ लङ्कां निकषा हनिष्यति । ]

११ सहादियोगे तृतीया । सह शिष्येणागतो गुरुः । एवं साकं–सार्धं–समंयोगेऽपि ॥

१२ तुल्यार्थयोगेऽपि । कृष्णेन तुल्यः । रामेण सदृशः ॥

१३ नमआदियोगे चतुर्थी । नमः कृष्णाय । एवं स्वस्ति–स्वाहा–स्वधा–ऽलं–वषड्योगेऽपि ॥

१४ क्रुध–द्रुहेर्ष्याऽसूया–स्पृहार्थानां योगेऽपि । हरये क्रुध्यति द्रुह्यति ईर्ष्यति असूयति स्पृहयति ॥

१५ ऋतेआदियोगे पञ्चमी । ऋते ज्ञानान्न मुक्तिः । एवमारादितरान्य–पृथक्–प्रागादियोगेऽपि ॥

१६ स्वाम्यादियोगे षष्ठी–सप्तम्यौ । गवां गोषु वा स्वामी दायादः प्रसूतः प्रतिभूर्वा ॥

१७ कालाध्वनोर्नैरन्तर्ये द्वितीया । मासं गच्छति । क्रोशं पर्वतः ॥

१८ हेतौ तृतीया–पञ्चम्यौ । जाड्येन जाड्याद् वा बद्धः ॥

१९ किञ्चित्प्रकृतिं प्राप्तस्य लक्षणे तृतीया । नेत्राभ्यां चारुः । जटाभिस्तापसः ॥

२० तादर्थ्ये चतुर्थी । मेधावी मोक्षाय धर्मं धत्ते ॥

२१ तुमोऽप्रयोगे कर्मणि चतुर्थी । फलेभ्यो याति ॥

२२ क्त्वपोऽप्रयोगे पञ्चमी । हर्म्यात् प्रेक्षते ॥

२३ निर्धारणे षष्ठी–सप्तम्यौ । छात्राणां छात्रेषु वा पटुः मैत्रः ॥

२४ कर्तृ–कार्ययोरक्तादौ कृति षष्ठी । कर्तरि कर्मणि च षष्ठी स्यात्, क्तादिवर्जिते कृत्प्रत्यये प्रयुज्यमाने । व्यासस्य कृतिः । जगतः कर्ता हरिः ॥

२५ गौणकर्मणि वा । नेताऽश्वस्य ग्रामं ग्रामस्य वा ॥

२६ उभयप्राप्तौ कर्मणि षष्ठी कर्तरि तु वा । शब्दाना-मनुशासनमाचार्येणाचार्यस्य वा । क्तादिवर्जिते इति किम् ?

विष्णुना हता दैत्याः। दैत्यान् हतवान् हरिः। क्त–क्तवत्–शतृ–शानच्–क्त्वा–ल्यप्–तुम्–खलिष्णूकणित्यादि क्तादयः । ग्रामं गतः ॥

२७ अप्रसिद्धक्रियोपलक्षणके भावे सप्तमी। वर्षति मेघे चौर आयातः ॥

२८ निमित्तकर्मणः सम्बन्धे निमित्तात् सप्तमी। केशेषु चमरीं हतवान् ॥

२९ अन्योक्ते प्रथमा। आख्यान–कृत्–तद्धित–समास–निपातोक्ते कारके सम्बन्धे च प्रथमा स्यात्। घटः क्रियते कुलालेन। हरिः करोति जगत् ॥

यस्मिन्नर्थे विधीयन्ते लकारास्तद्धिताः कृतः।
समासो वा भवेद् यत्र स उक्तः प्रथमा ततः ॥१॥

कर्तरि प्रथमा यत्र द्वितीया तत्र कर्मणि।
कृदाख्यातक्रियाऽत्र स्यात् कर्तरि प्रत्ययान्विता ॥२॥

अकर्मको यदा धातुः कर्म तत्र न सम्भवेत्।
कर्तैव प्रथमान्तः स्यात् कर्तरि प्रत्यया क्रिया ॥३॥

तृतीयान्तो यदा कर्ता प्रथमाऽत्र च कर्मणि।
कृदाख्यातक्रियाऽत्र स्यात् कर्मणि प्रत्ययान्विता ॥४॥

अकर्मको यदा धातुः कर्म तत्र न सम्भवेत् ।
कर्तैवात्र तृतीयान्तः स्याद् भावे प्रत्यया क्रिया ॥५॥

कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाधिकरणे इत्याहुः कारकाणि षट् ॥६॥

इति कारकप्रक्रिया ।

---

## अथ समासप्रकरणम् ।

१ **समासश्चान्वये नाम्नाम्** । पदयोः पदानां वाऽन्वये समस्यैव समासः स्यात् । चशब्दात् कृत्–तद्धित–धातु–संज्ञाविधायकाः प्रत्ययादयोऽपि ॥

२ **पूर्वेऽव्ययेऽव्ययीभावः** । अव्यये पूर्वपदेऽव्ययीभावसंज्ञः समासः स्यात् ।

३ **समास–प्रत्ययोः** । समासे प्रत्यये च परे विभक्ते–र्लुक् स्यात् । नामसंज्ञायां स्यादिः ॥

४ **स नपुंसकम्** । अव्ययीभावो नपुंसकलिङ्गः स्यात् । ‘ नपुंसकस्य ’ इति ह्रस्वः ।

५ **अव्ययीभावात्** । अव्ययीभावाद् विभक्तेर्लुक् । अधिस्त्रि ।

६ **अतोऽमनतः** । अदन्तादव्ययीभावाद् विभक्तेर्न लुक्, अतं वर्जयित्वा अमादेशः । उपकुम्भम् ॥

७ **वा टा–ङ्योः** । अदन्तादव्ययीभावात् टा–ङ्योरम् वा । उपकुम्भम्, उपकुम्भेन वा । उपकुम्भात् । उपकुम्भे,उपकुम्भम् ॥

८ **क्वचिद् वा** । अपविष्णोः, अपविष्णु । बहिर्वनम्, बहिर्वनात् । आमुक्ति, आमुक्तेः ॥

९ **क्वचिन्न** । यथा हरिस्तथा हरः ॥

१० **क्वचिदनव्यये पूर्वपदेऽव्ययीभावः** । उन्मत्तगङ्गम् । द्वियमुनम् ॥

११ **क्वचिदव्यये उत्तरपदेऽपि** । अक्षपरि । शाकप्रति ॥

१२ **आयतीगवादयो निपात्याः** । आयतीगवम् । तिष्ठद्गु इत्यादि ॥

१३ **टाड–काः** । समासे सति ट अ ड क इत्येते प्रत्यया यथाप्रयोगं प्रयोक्तव्याः । उपशरदम् । प्रत्यक्षम् । उपराजम् ॥

इत्यव्ययीभावः ॥ १ ॥

१४ **अमादौ तत्पुरुषः**। द्वितीयाद्यन्ते पूर्वपदे तत्पुरुषसंज्ञः समासः स्यात् । ग्रामप्राप्तः । हरित्रातः । यूपदारु । सुखापेतः । राजपुरुषः । अक्षशौण्डः । क्वचित् षष्ठी न समस्यते । नृणां द्विजः । फलानां सुहितः । क्वचिद् द्वितीयाद्यन्तस्य परत्वम् । अतिराः । भूतपूर्वः । अर्धपिप्पली । [ पूर्वकायः ]॥

१५ **नो वा** । नान्तस्य टेर्लोपः स्यात्, य–स्वरयोः । वाग्रहणात् क्वचिदुपधाया लोपः । मध्याह्नः । इत्यादि । क्वचित् समासे णत्वं निमित्ते सति । आम्रवणं । शूर्पणखा ॥

१६ नञ् । नञव्यये पूर्वपदे तत्पुरुषसंज्ञः समासः स्यात् । नञ्समासे सति नञोऽदादेशः स्यात् । अधर्मः ॥

१७ अन् स्वरे । समासे नञोऽन् स्यात्, स्वरे । अनश्वः । क्वचिन्न नक्षत्रम् । नासत्यौ । नाकः । [तदन्य–तद्विरुद्ध–तदभावेषु नञ् वर्तते ]

इति तत्पुरुषः ॥ २ ॥

१८ चार्थे द्वन्द्वः । [ समुच्चयान्वाचयेतरेतरयोग–समाहाराश्चार्थाः । कर्मद्वयस्य एकक्रियानिष्ठत्वं समुच्चयः । कर्मद्वयेऽपि प्रत्येकं क्रियासम्बन्धोऽन्वाचयः । पदद्वयेन द्वन्द्व इतरेतरयोगः । बहूनां पदानां समवायः समाहारः । ] इतरेतरयोगे समाहारे चार्थे द्वन्द्वसमासः स्यात् ॥

१९ द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपातः । धव–खदिरौ । तापस–पर्वतौ । अग्नि–मारुतौ । पटु-गुप्तौ ॥

२० स्वराद्यदन्तस्य च । ईश–कृष्णौ ॥

२१ देवताया द्वन्द्वे पूर्वपदस्यात्वम् । इन्द्रा-बृहस्पती ॥

२२ प्राणि–तूर्य–सेनाऽङ्गानां द्वन्द्वे समाहार एव । [ प्राण्यङ्गे यथा–पाणी च पादौ च मुखं च पाणि–पाद–मुखम् । तूर्याङ्गे यथा–मार्दङ्गिकश्च वैणविकश्च मार्दङ्गिक–वैणविकम् । ] समाहारे एकवद्भावः ॥

**२३ एकत्वे द्विगु–द्वन्द्वौ** । एकत्वे द्विगु–द्वन्द्वौ नपुंसकलिङ्गौ स्तः । दन्तोष्ठम् । मार्दङ्गिक–पाणविकम् । रथिकाश्वारोहम् ।

**२४ बहुसङ्ख्यानां मृग–शकुनि–क्षुद्रजन्तु–वनस्पत्यादीनां समाहारः** । रुरु–पृषतम् । शुक–बकम् । यूका–लिक्षम् । बदरामलकम् । व्रीहि–यवम् । कुश–काशम् ॥

इति द्वन्द्वः ॥ ३ ॥

**२५ समाहारे द्विगुः** । सङ्ख्यापूर्वपदे समाहारेऽर्थे द्विगुः समासः स्यात् ॥'अत ईप् ।' ततोऽदन्तादीप् । दशग्रामी । पञ्चाग्नि । क्वचिन्नेप् त्रिभुवनम् । चतुर्युगम् ॥

इति द्विगुः ॥ ४ ॥

**२६ बहुव्रीहिरन्यार्थे** । अन्यपदार्थे प्रधाने बहुव्रीहिसंज्ञकः समासः स्यात् । बहुव्रीहौ विशेषण–सप्तम्यन्त–क्तान्त–सङ्ख्या–सर्वादीनां पूर्वनिपातः । बहुधनः । भाललोचनः । कृतकटः । द्विपुत्रः । सर्वप्रियः । क्वचिन्न–पद्मनाभः । दन्तजातः ।

**२७ नञ्–सु–दुर्भ्यः प्रजा–मेधयोरसुक्** । अप्रजाः । सुप्रजाः । दुःप्रजाः । दुर्मेधाः ॥

**२८ धर्मादन्** [ केवलात् । ] सुधर्मा । [ कल्याणधर्मा ॥]

**२९ अन्यार्थे** । स्त्रीप्रत्ययान्तस्य ह्रस्वः स्यात् ॥

**३० पुंवद् वा पूर्वस्य** । समासे समानाधिकरणे स्त्रीलिङ्गे पूर्वोक्तपुंस्कस्य स्त्रीलिङ्गस्य पुंवत् स्यात् । रूपवद्भार्यः ॥ ऊप्रत्ययान्तस्य न–वामोरूभार्यः ।

३१ गोः । अन्यार्थे गोशब्दस्य ह्रस्वः स्यात् । पञ्चगुः ॥

इति बहुव्रीहिः ॥ ५ ॥

३२ कर्मधारयस्तुल्यार्थे । तुल्यार्थे पदद्वये कर्मधारयसंज्ञः समासः स्यात् । नीलोत्पलम् । रक्तलता ॥

इति कर्मधारयः ॥ ६ ॥

३३ नाम्नश्च कृता समासः । नाम्नः कृदन्तेन सह तत्पुरुषसमासः स्यात् । कुम्भकारः । व्याघ्रः ॥

३४ सहादेः सादिः । समासे सहादीनां सादिरादेशः स्यात् । सपुत्रः । सध्रयङ् । सम्यङ् । तिर्यङ् । कोष्णम् । कदुष्णम् । दम्पती । कुदेशः । कापुरुषः । महादेवः । सुगन्धिः । सवयाः । क्षीरोदः । बलाहकः । पृषोदरम् इत्याद्याकृतिगणोऽयम् ॥

३५ अलुक् क्वचित् । समासे तद्धिते च विभक्तेर्लुक् न स्यात् । सरसिजम् । उरसिलोमा । युधिष्ठिरः । आत्मनेपदम् । परस्मैपदम् । आमुष्यायणः ।

३६ आदेश्च द्वन्द्वे । क्वचिदादेर्लोपः स्यात् । पितरौ । भ्रातरौ ॥

३७ शाकपार्थिवादीनां मध्यमपदलोपः । शाक—पार्थिवः । देव—ब्राह्मणः ॥ सरूपाणामेकशेषविभक्तौ यो यः शिष्यते स लुप्यमानार्थाभिधायी । देवौ देवाः ॥

३८ द्वन्द्व-तत्पुरुषयोः परपदस्यैव लिङ्गम् । कुक्कुट-मयूर्यौ । अर्धशाखा ॥

३९ सेना-सुरा-च्छाया-शाला-निशान्तस्तत्पुरुषो वा क्लीबम् । शूरसेनम् । यवसुरम् । कुड्यच्छायम् । धेनुशालम् । देवनिशम् । पक्षे शूरसेना इत्यादि ॥

४० पूर्वपदार्थबाहुल्ये छायान्ततत्पुरुषः क्लीबम् । [ इक्षूणां छाया ] इक्षुच्छायम् ॥

४१ आबन्तो द्विगुर्वा क्लीबम् । पञ्चखट्वम्, पञ्चखट्वी ॥

४२ अनो नलोपोऽपि । पञ्चनक्षम्, पञ्चतक्षी ॥

४३ रात्राह्नाहान्ताः पुंस्येव । अहोरात्रः । पूर्वाह्णः । द्व्यहः ॥

४४ पुण्य-सुदिनाभ्यामहः सङ्ख्यापूर्वं रात्रं च क्लीबम् । पुण्याहम् । सुदिनाहम् । त्रिरात्रम् ॥

४५ क्रियाऽव्यय-विशेषणानां क्लीबत्वम् । एकवचनम् । सानन्दं नमति गुरुम् । प्राप्तः श्रेयस्तरम् ॥

इति समासप्रक्रिया ।

इति श्रीसिद्धान्तरत्निकायां शब्दानुशासने
सिबन्तवृत्तिः परिपूर्तिमगात् ॥

अर्हम् ।

# आख्यातवृत्तिः प्रारभ्यते ।

## अथ भ्वादिषु परस्मैपदिनः ।

१ भ्वादिः । क्रियावाची भ्वादिर्धातुसंज्ञकः स्यात् ।

२ धातोः । वक्ष्यमाणाः प्रत्यया धातोर्ज्ञेयाः ।

३ वर्त्तमाने । तिप् तस् अन्ति । सिप् थस् थ । मिप् वस् मस् । ते आते अन्ते । से आथे ध्वे । ए वहे महे । एषां संज्ञा लट् ।

४ नव [1]पं । तिबादीनामाद्यानि नव वचनानि पंसंज्ञानि स्युः ।

५ पराण्यात् । पराणि नव वचनानि आत्मनेपदसंज्ञानि स्युः ।

६ आदनुदात्तङितः । अनुदात्तेतो ङितश्च धातोरात्स्यात् ।

७ ञित्स्वरितेत उभे । ञितः स्वरितेतश्च धातोरात्पे स्तः ।

८ परतोऽन्यत् । उक्तनिमित्तहीनाद्धातोः पं स्यात् ।

९ नाम्नि च युष्मदि चास्मदि च भागैः । नामयुष्मदस्मत्सूपपदेष्वेते प्रत्ययास्त्रिभिर्भागैः स्युरात्पयोः । नाम्नि प्रयुज्यमाने चाप्रयुज्यमाने प्रथमः ।

---

१ परस्मैपदम् ।

१० कर्तरि पं च । चादात् । भू सत्तायाम् ।

११ अप् कर्तरि । कर्तरि चतुर्षु धातोरप् स्यात् ।

१२ गुणः । नाम्यन्तस्य धातोर्गुणः स्यात् । भवति ।

१३ अपित्तादिर्ङित् । पकारेतं तादिकं च विनान्यः प्रत्ययो ङित् स्यात् ।

१४ क्ङित्यद्व्युसि । किति ङिति च परे वृद्धिगुणौ न स्तः । कृतद्वित्वस्योसि तु स्यादेव इति तसि गुणाप्राप्तौ अब्निमित्तो गुणः । भवतः ।

१५ अदे । अतो लोपः स्यात्, अकारे एकारे च । भवन्ति । भवसि भवथः भवथ ।

१६ व्मोरा । वमयोः परयोरत आत्वं स्यात् । भवामि भवावः भवामः । स भवति । त्वं भवसि । अहं भवामि ।

१७ विधिसंभावनयोः । यात् याताम् युस् । यास् यातम् यात । याम् याव याम । ईत ईयाताम् ईरन् । ईथास् ईयाथाम् ईध्वम् । ईय ईवहि ईमहि । एषां संज्ञा लिङ् ।

१८ या । अतः परो या इः स्यात् । भवेत् भवेताम् ।

१९ युस इट् । अतः परस्य युस इट् स्यात् । भवेयुः । भवेः भवेतम् भवेत ।

२० यामियम् । अतः परो यामियं स्यात् । भवेयम् भवेव भवेम । साधुः समताविष्टो भवेत् ।

२१ आशीःप्रेरणयोः। तुप् ताम् अन्तु। हि तं त। आनिप् आवप् आमप्। ताम् आताम् अन्ताम्। स्व आथाम् ध्वम्। ऐप् आवहैप् आमहैप। एषां संज्ञा लोट्। भवतु।

२२ तुह्योस्तातङाशिषि[1] वा। भवतात् भवताम् भवन्तु।

२३ अतः। अतः परस्य हेर्लुक् स्यात्। भव भवतात् भवतम् भवत। भवानि भवाव भवाम। धर्मवान् भव, भवतात्।

२४ अनद्यतनेऽतीते। दिप् ताम् अन्। सिप् तम् त। अमिप व म। तन् आताम् अन्त। थास् आथाम् ध्वम्। ई वहि महि। एषां संज्ञा लङ्। अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमं यामद्वयं दिवसश्च सकलः सोऽद्यतनः, नास्ति अद्यतनोऽस्मिन्नतीते काले तत्र दिबादयः। दिसिमीनामिकार उच्चारणार्थः।

२५ दिबादावट्। दिबादौ धातोरट् स्यात्। अभवत् अभवतां अभवन्। अभवः अभवतम् अभवत। अभवम् अभवाव अभवाम। ह्योऽभवज्जिनबिम्बप्रतिष्ठा।

२६ परोक्षे। णप् अतुस् उस्। थप् अथुस् अ। णप् व म। ए आते इरे। से आथे ध्वे। ए वहे महे। एषां संज्ञा लिट्।

२७ द्विश्च। धातोर्द्विवचनमुक्ताथणबादियोगे।

---

१ प्रेरणे तु तातङ् न स्यात्।

**२८ सस्वरादिर्द्विरद्विः ।** धातोराद्योऽवयवः सस्वरोऽद्विर्मतो द्विः स्यात् णादौ ।

**२९ णादिः कित् ।** अपित् णादिः कित् स्यात् ।

**३० आभ्वोर्णादौ ।** पूर्वस्याऽकारस्य भूशब्दस्य चाऽऽत्वम् स्यात् णादौ ।

**३१ ह्रस्वः ।** पूर्वदीर्घस्य ह्रस्वः स्यात् ।

**३२ झपानां जबचपाः ।** पूर्वझपानां जबाश्चपाः स्युः । झढधघभानां जडदगबाः । छठथखफानां चटतकपाः स्युः ।

**३३ भुवो वुक् ।** भुवो वुगागमः स्याद् णादौ स्वरे । बभव बभवतुः बभुवुः ।

**३४ क्रादेर्णादेः ।** कृ सृ भृ वृ द्रु स्तु श्रु स्रु इत्येतेभ्यः परस्य वसादेर्णादेरिण् न स्यात्, अन्येभ्यस्तु भवत्येवेति नियमादिट् स्यात् । बभूविथ बभूवथुः बभूव । बभूव बभूविव बभूविम । कुमारपालो धर्मपालको बभूव ।

**३५ आशिषि ।** यात् यास्तां यासुम् । यास् यास्तं यास्त । यासं यास्व यास्म । सीष्ट सीयास्तां सीरन् । सीष्ठास् सीयास्थां सीध्वम् । सीय सीवहि सीमहि । एषां संज्ञा लिङ् ।

**३६ आशीर्यादादेः पं कित् ।** भूयात् भूयास्तां भूयासुः । भूयाः भूयास्तं भूयास्त । भूयासम् भूयास्व भूयास्म । त्वं धर्मी भूयाः ।

**३७ श्वस्तने। ता तारौ तारस्। तासि तास्थस् तास्थ। तास्मि तास्वस् तास्मस्। ता तारौ तारस्। तासे तासाथे ताध्वे। ताहे तास्वहे तास्महे।** एषां संज्ञा लुट्।

**३८ सिसतासीस्यपामिट्।** भविता भवितारौ भवितारः। भवितासि भवितास्थः भवितास्थ। भवितास्मि भवितास्वः भवितास्मः। श्वोभाविन्यर्थे तादयः। यथा श्वो विशिष्टा वीतरागभक्तिर्भविता।

**३९ त्यादौ भविष्यति स्यप्।** धातोर्भविष्यति काले स्यप् प्रत्ययः स्यात् तिबादिप्रत्ययेषु। एषां संज्ञा लट्। भविष्यति भविष्यतः भविष्यन्ति। भविष्यसि भविष्यथः भविष्यथ। भविष्यामि भविष्यावः भविष्यामः। कल्की धर्मपालको भविष्यति।

**४० स्यप् क्रियाऽतिक्रमे।** कुतश्चित् कार्यानिष्पत्तौ सत्यां स्यप् प्रत्ययः स्याद् दिबादिषु परतः। एषां संज्ञा लङ्। अभविष्यत अभविष्यताम् अभविष्यन्। अभविष्यः अभविष्यतम् अभविष्यत। अभविष्यम् अभविष्याव अभविष्याम। यदि जैनानां राज्यमभविष्यत् तदा विश्वं वीतभयमभविष्यत्।

**४१ भूते सिः।** धातोर्भूतमात्रे काले सिः प्रत्ययः स्याद् दिबादौ। एषां संज्ञा लुङ्।

**४२ दादेः पे।** अपिद्दाधास्थेणभूपिबतिभ्यः परस्य सेर्लोपः पे।

६१ **णबुत्तमो वा णित्** । जगाद जगद ।

६२ **पे सिर्णित्** ।

६३ **हसादेर्लघोरतो वा वृद्धिः सेटि सौ** । अगादीत् अगदीत् । जप जल्प व्यक्तायां वाचि । जपति । जल्पति ।

६४ **लोपः पचां किल्ये चास्य** । पचादीनां किति लिट्यनादेशादीनां पूर्वस्य लोपः स्यात्, एकहसमध्यस्थस्याकारस्यैकारश्च किति णादौ सेटि थपि च । जेपतुः । जेपिथ । जजल्पतुः । जजल्पिथ ।

इदि परमैश्वर्ये । इन्दति ।

६५ **स्वरादेः** । स्वरादेर्धातोर्द्वितीयोऽडागमः स्याद् दिबादौ परे । ऐन्दत् ।

६६ **कासादिप्रत्ययादाम् कसभूपरः** । कास्-आस्-दय-अय-गुरुनाम्याद्यनेकस्वराच्चाम् प्रत्ययः स्याद् णबादौ, स च कृ-असृ-भू-परः ।

६७ **विददरिद्राजागृषां वा** । इन्दांचकार । इन्दामास । इन्दांबभूव । अञ्चु गति-पूजनयोः ।

६८ **नुगशाम्** । अश्नोतेः, ऋकारादेः, संयोगान्ताकारादेश्च पूर्वस्य नुक् स्याद् णादौ । आनञ्च ।

६९ **नो लोपः** । हसान्तस्य धातोरुपधास्थितनकारस्य लोपः स्यात् किति ङिति च । अच्यात् ।

---

१ क. सेर्णित् । २ क. पचादीनामनादेशादीनाम् ।

७० **पूजार्थाञ्चतेर्न**। जिनदत्तः तीर्थनाथं अञ्च्यात्। निरुपपदात् क्रुञ्चधातोः क्विपि लोपो न स्यात्। **शसु** हिंसायाम्। शसति।

७१ **शंसदद्वादिगुणभूताकाराणां नैत्व-पूर्वलोपौ**[1]। शशसतुः।

**व्रज** गतौ। व्रजति। व्रजेत्। वव्राज।

७२ **वदि-व्रज्योः सौ नित्यं वृद्धिः**[2]। अव्राजीत्।

**जि** जये। जयति।

७३ **सपरोक्षयोर्जेर्गिः**[3]।

७४ **धातोर्नामिनः**। नाम्यन्तस्यादन्तस्य च धातोर्वृद्धिः स्याद् ञ्णिति। जिगाय।

७५ **नु-धातोः**। विकरणस्य नोर्धातोश्चवर्णोवर्णयोरियुवौ स्यातां स्वरे। अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ।

७६ **उवर्णान्तेषु हु-न्वोरेवापि**[4]। जिग्यतुः।

७७ **स्वरान्तादत्वतश्च तादौ नित्यानिटस्थपो वेट्**। जिगयिथ जिगेथ।

७८ **ये**। पूर्वस्य दीर्घोऽनपि ये परे। जीयात्।

७९ **नैकस्वरादनुदात्तात्**। आद्योच्चारणेऽनुदात्तादेकस्वराद् धातोः परस्य वसादेरिट् न स्यात्। जेता। जेष्यति। अजैषीत्।

---

१ इदं सूत्रं लोपः पचामिति सूत्रस्य बाधकम्। २ हसादेर्लघोरिति सूत्रस्य बाधकमेतत्। ३ सान्तप्रक्रियायाः सप्रत्यये। ४ हुधातु-नुप्रत्यययोरेवाब्विषये वकारः।

## अथानिट्कारिका ।

स्वरान्तेष्विमे सेटः । अदन्ताः । इवर्णान्तेषु श्वि–डीङ्–शीङ्–श्रियः । उदन्तेषु रु–स्नु–क्षु–युु–णु–क्ष्णूर्णवः । ऊदन्ताः । ऋदन्तेषु वृङ्–वृञौ । ॠदन्ताश्च । अन्येऽनिटः । हसान्तेष्विमेऽनिटस्तत्र हान्ता दिहि–दुहि–मिहि–रुहि–वहि–नहि–दहि–लिहयः । नान्तौ मनि–हनी । मान्ता नमि–यमि–रमि–गमयः। धान्ता रुधि–युधि–बन्धि–राधि–साधि–क्रुधि–क्षुधि–शुधि–बुधि–व्यधयः । भान्ता यभि–रभि–लभयः । जान्तेषु सञ्जि–मज्जि–भृज्जि–भुजि–णिजि–त्यजि–यजि–स्वजि–सृजि–विजि–मृजि–भंजि–रंजि–युजि–रुजयः। दान्तेषु अदि–हदि–स्कन्दि–भिदि–छिदि–क्षुदि–शदि–सदि–स्विदि–पदि–नुदि–तुदि–खिदि–विदयः । छान्तः पृच्छतिः । चान्तेषु पचि–वचि–विचि–रिचि–सिचि–मुचयः । कान्तेष्वेकः शाकः । पान्ता आपि–तपि तिपि–वपि–स्वपि–लिपि–तृपि–दृपि–लुपि–सृपि–क्षिपि–शपि–छुपय । शान्तेषु दिशि–दृशि–दंशि–स्पृशि–मृशि–क्रुशि–रुशि–रिशि–लिशि–विशयः । षान्तास्तुषि–शुषि–शिषि–पिषि–विषि–त्विषि–श्लिषि–दुषि–कृषि–द्विषयः । सान्तेषु वसि–घसी च । अन्ये सेटः । इत्यनिट्कारिका ।

ष्ठिवु निरसने ।

८० ष्ठिवु-क्लम्वाचमां दीर्घोऽपि।

८१ नामधातु-व्यञ्क-ष्ठिवां सत्वं न। 'ष्वोर्विहसे' ष्ठीवति।

८२ न शसात् खपाः। पूर्वशसात् पराः खपाः शिष्यन्ते, न शसाः। टिष्ठेव।

८३ ष्ठिवेः पूर्वस्य ठस्य थो वा। तिष्ठेव।

चमु अदने। आचामति। अन्यत्र यशोधरश्चमति, विचमति।

गुपू रक्षणे।

८४ आयः। गुपू-धूप-विच्छि-पणि-पनिभ्यः स्वार्थे आयः प्रत्ययः स्यात्, अनपि तु वा।

८५ स धातुः। यङादिप्रत्ययान्तः शब्दो धातुसंज्ञः स्यात्। गोपायति। गोपायांचकार। जुगोप जुगोपिथ जुगोप्थ।

८६ यतः। यस्यातश्चानपि लोपः। गुप्यात् गोपाय्यात्। गोपायिता गोपिता गोप्ता। अगोपायीत् अगोपीत् अगौप्सीत्। एवं धूप संतापे। क्रमु पादविक्षेपे।

८७ भ्रास-भ्लाश-भ्रमु-क्रमु-क्लमु-त्रसि-त्रुटि-लषां यो वा कर्त्रर्थेषु चतुर्षु।

८८ क्रमः पे दीर्घोऽव्विषये। क्राम्यति क्रामति।

८९ हृम्यन्त-क्षण-श्वस जागृ-ण्येदितां सेटि सौ न वृद्धिः। अक्रमीत्।

---

१ आयामौ न ङितौ।

यम उपरमे ।

९० **गमां छः** । गम-यमेषूणां छः स्याद्वृविषये । यच्छति।

९१ **यमि-रमि-नमातां सक्, सेरिट् पे** । अयसीत् । **णम** प्रह्वत्वे शब्दे च । नमति । नेमिथ ननन्थ । अनंसीत् । **गम्लृ** गतौ । गच्छति ।

९२ **गमां स्वरे** । गम—हन—जन—खन—घसामुपधाया लोपः स्वरे क्ङिति, न तु ङे । जग्मतुः । जगन्थ ।

९३ **हनृतः स्यप** । हन्तेर्ऋदन्ताच्च स्यप इट् स्यात, गमेस्तु पे । गमिष्यति ।

९४ **लित्पुषादेर्ङः** । लितः पुषादेश्च ङः प्रत्ययः स्यात्, लुङि पे, सेरपवादः । अगमत् ।

फल निष्पत्तौ ।

९५ **तॄ-फल-भज-त्रपाम्** । किति णादौ सेटि थपि चैत्वपूर्व-लोपौ । फेलतुः फेलिथ ।

९६ **ल्रान्तस्य सौ नित्यं वृद्धिः** । अफालीत् । **चर** गति—भक्षणयोः । चरति । अचारीत् । **कृष** विलेखने । कर्षति ।

९७ **रः** । पूर्वऋवर्णस्य अः स्यात् । चकर्ष ।

९८ **रारो झसे दृशाम्** । दृश—सृज—कृष—मृश—स्पृश—तृप—दृप—सृपां झसे अरो रः, आरो राश्च स्यात् ।

९९ **कृषादीनां वा** । क्रष्टा कर्ष्टा ।

---

१ आदन्तधातूनाम् ।

१०० ष-ढोः कस्से। धातोः षढयोः कत्वं स्यात् से परे। क्रक्ष्यति कर्क्ष्यति। अक्राक्षीत् अकार्क्षीत्।

१०१ कृष-मृश-स्पृश-मृष-तृप-दृपां वा सिः।

१०२ ह-श-षान्तात् सक्। हान्तात् शान्तात् षान्तान्नाम्युपधादनिटः सक् स्याल्लुङि, न तु दृशेः, सेरपवादः। अकृक्षत्।

ग्लै म्लै हर्षक्षये। ग्लायति। म्लायति।

१०३ सन्ध्यक्षराणामा। अनपि।

१०४ आतो णब् डौ। आदन्तात धातोर्णब् डौ स्यात्। जग्लौ। मम्लौ।

१०५ आतोऽनपि। धातोराकारस्य लोपोऽनपि क्ङिति स्वरे, सेटि थपि च। जग्लतुः। जग्लिथ जग्लाथ।

१०६ संयोगादेरादन्तस्याशीर्यादादौ पे एकारो वा। ग्लायात् ग्लेयात्।

कै गै रै शब्दे।

१०७ दादेरेः। अपिद्दाधामागैहाक्पिबतिसोस्थामात एत्वं स्यादाशीर्यादादौ पे। गेयात्।

धेट् पाने। धयति। दधौ। धेयात्।

१०८ धेटो लुङि ङो वा द्वित्वं च। अदधत्।

१०९ शा-च्छा-सा-घ्रा-धेटां वा सेर्लुक्। अधासीत्। अधात्।

११० उस्यालोपः। अधुः।

दृशिर् प्रेक्षणे ।

१११ **दृशादेः पश्यादिः** । दृश–ऋ–सृ–शद–सद–पा–घ्रा–ध्मा–म्ना–दाण्–स्थानां पश्य–ऋच्छ–धौ–शीय–सीद–पिब–जिघ्र–धम–मन–यच्छ–तिष्ठाः कर्तरि चतुर्षु । पश्यति ।

११२ **सृजि–दृशोस्थपो वेट्** । ददर्शिथ दद्रष्ठ ।

११३ **इरितो वा** । इरितो धातोर्वा ङप्रत्ययो भवति लुङि पे, सेरपवादः ।

११४ **ऋवर्ण–दृशोर्ङे गुणः** । अदर्शत् । अद्राक्षीत् ।

ऋ गतौ । ऋच्छति ।

११५ **गुणोऽर्ति–संयोगाद्योः** । अर्तेः, संयोगादेर्ऋदन्तस्य च गुणः स्याद् यकि यङि किति णादावाशीर्यादादौ च । आर आरतुः आरुः ।

११६ **अत्त्यर्ति–व्ययतीनां थपो नित्यमिट्** । आरिथ । अर्ता ।

११७ **सर्ति–शास्त्यर्तिभ्यो ङो लुङि** । सेरपवाद । आरत् आरतां आरन् । आरः ।

सृ गतौ । धावति ।

११८ **ऋदन्तात् थपो नेट्** । ससर्थ ।

११९ **यादादौ ऋतो रिङ् पे** । ङकारो दीर्घ–निवारणाय । स्रियात् । असरत् ।

स्रु गतौ । सुस्रविथ सुस्रोथ ।

---

१ शीघ्रगतावेव धौ आदेशः ।

१२० श्रिस्रुद्रुभ्यो ङो धातोश्च द्वित्वं लुङि । सेरपवादः। असुस्रुवत् । दु द्रु गतौ । अदुद्रुवत् ।

श्रु श्रवणे । ( श्रुवश्चतुर्षु शृ आदेशो नुप्रत्ययश्च ) 'नूपः' शृणोति शृण्वन्ति ' ओर्म्वोर्वा लोपः ' शृण्वः शृणुवः । शुश्रविथ शुश्रोथ । श्रूयात् । श्रोता । अश्रौषीत् । पा पाने । पिबति । पेयात् । अपात् । घ्रा गन्धोपादाने । जिघ्रति । अघ्रासीत् अघ्रात् । ध्मा शब्दाग्निसंयोगयोः । धमति । अध्मासीत् । ष्ठा गतिनिवृत्तौ । तिष्ठति । स्थेयात् । अस्थात् । म्ना अभ्यासे । मनति । अम्नासीत् । दाण् दाने । यच्छति । देयात् । अदात् । स्कन्दिर् गति-शोषणयोः । चस्कन्दिथ चस्कन्थ[1] । चस्कन्ता । सावनिटो वृद्धिः । अस्कान्त्सीत् । अस्कदत् ।

तॄ प्लवन-तरणयोः । तेरतुः । तेरिथ ।

१२१ ॠत इर् । ॠकारस्येर् स्यादगुण-वृद्धिविषये । तीर्यात् ।

१२२ इटो ग्रहाम् । ग्रहादीनामिटो दीर्घ[2]:, न तु णादौ ।

१२३ वृङ्-वृञ्-ॠदन्तानां वा। न तु णादौ पे सौ सीष्टादौ च । तरीता तरिता । अतारीत् अतारिष्टाम् ।

दंश दशने ।

१२४ अपि रञ्ज-दंश-सञ्ज-स्वञ्जाम् । नस्य लोपोऽपि।

---

१ इट् ईः स्यादिति 'क' पुस्तके पाठः । २ (हसात् परस्य झसस्य लोपो वा सवर्णे झसे ).

दशति । ददंष्ठ । दश्यात् । अदाङ्क्षीत् । षञ्ज सङ्गे । सजति । ससञ्जथ । सज्यात् । असाङ्क्षीत् ।

कित रोगापनयने संशये च ।

१२५ गुबुभ्यः । गुप्-तिज्-कित्-बध्-मान्-दान्-शान्भ्यः स्वार्थे स प्रत्ययः स्याद् धातोश्च द्वित्वम् ।

१२६ यः से । पूर्वस्यात इत् स्यात् से । चिकित्सति । चिकित्सांचक्रे । चिकित्स्यात् । अचिकित्सीत् ।

पत्लृ पतने । पतति । पेततुः । पेतिथ । पतिता ।

१२७ पतेर्ङे पुम् । अपप्तत् ।

भ्रमु चलने ।

१२८ शमां दीर्घो ये । भ्राम्यति भ्रमति ।

१२९ फण-राजृ-भ्राजृ-भ्राशृ-भ्लाशृ-स्यमु-स्वन-जॄष-भ्रमु-त्रसाम् । एत्वपूर्वलोपौ वा । भ्रेमतुः बभ्रमतुः । अभ्रमीत् । टुवम्‌ उद्गिरणे । वमति । वम एत्व-पूर्वलोपौ वेति केचित् । वेमतुः ववमतुः । अवमीत् । स्वन शब्दे । स्वनति । स्वेनतुः सस्वनतुः । स्वेनिथ सस्वनिथ । अस्वानीत् अस्वनीत् ।

वस निवासे । वसति ।

१३० णबादौ पूर्वस्य । यजादीनां ग्रहादीनां च पूर्वस्य संप्रसारणं स्याद् णबादौ ।

१३१ य-व-राणामिदुदृतः । यथासङ्ख्यम् । सस्वरस्य संप्रसारणम् । दीर्घस्य दीर्घः, ह्रस्वस्य ह्रस्वः । उवास ।

१३२ **यजां य-व-राणां य्वृतः संप्रसारणं किति ।** यजादीनां संप्रसारणं स्यात् किति ।

**यजिर्वपिर्वहिश्चैव वेञ्-व्येञौ ह्वयतिः स्वपिः ।**

**वदि-वसी श्वयतिर्वक्तिरेकादश यजादयः ॥ १ ॥**

१३३ **घसादेः षः ।** घसि-शासि-वसीनां सस्य षः स्यात् निमित्ते सति । ऊषुः उवसिथ उवस्थ । उष्यात् ।

१३४ **सस्तोऽनपि ।** सस्य तोऽनपि से । वत्स्यति । अवात्सीत् ।

रुह बीजजन्मनि प्रादुर्भावे च । रोहति । रुरोह रुरोहिथ ।

१३५ **ढि ढो लोपो दीर्घश्च ।** ढे परे ढस्य लोपः स्यात् चानृतो दीर्घः स्यात् । रोढा । अरुक्षत् ।

**मिह** सेचने । मेहति । मिह्यात् । मेढा । अमिक्षत् । **क्षि** क्षये । क्षयति । चिक्षाय चिक्षेथ चिक्षयिथ । क्षेता । अक्षैषीत् । दह भस्मीकरणे । देहिथ ददग्ध । धक्ष्यति । अधाक्षीत् अदाग्धाम् । श्चुतिर् क्षरणे । श्चोतति । अश्च्योतित् अश्च्युतत् । ईर्ष्य ईर्ष्यायाम् । **फुल्ल** विकसने । **कुथि** हिंसा-संक्लेशनयोः । षिधु गत्याम् । **खाद** भक्षणे ।

उख गतौ ।

१३६ **असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ ।** उवोख । औखीत् ।

**णद** अव्यक्ते शब्दे । नेदतुः । **वद** व्यक्तायां वाचि । उवाद ऊदतुः उवदिथ । अवादीत् । **ध्यै** चिन्तायाम् । ध्यायति । दध्यौ । अध्यासीत् । **वृषु** सेचने । **णिदि** कुत्सायाम् । **चदि** आह्लादने । **क्लिदि** परिदेवने । चिक्लिन्द । तप संतापे । सृप्लृ गतौ ।

**टुओश्विइर्** गति-वृद्ध्योः । श्वयति ।

१३७ **श्वयतेर्णादौ संप्रसारणं वा ततो द्वित्वम्** । शुशाव शुशुवतुः । शुशविथ । शिश्वाय शिश्वियतुः । शिश्वयिथ । शूयात् । श्वयिता । अश्वयीत् ।

१३८ **श्वयतेरितो लोपो ङे** । अश्वत् अश्वन् अश्वः ।

१३९ **श्वयतेर्ङे वा द्वित्वे एरलोपः** । अशिश्वियत् अशिश्वियः । **जिमु** अदने । जिजेम जिजेमिथ । अजेमीत् । **घस्लृ** अदने । घसति । जघास जक्षतुः जक्षुः । जघसिथ जघस्थ । घस्ता । घत्स्यति । अघत्स्यत् । अघसत् ।

इति परस्मैपदिनः ।

## अथात्मनेपदिनः ।

**एध वृद्धौ ।** एधते ।

**१४० आदाथ ईः ।** अतः परस्याते आथश्चात ईर्भवति[1] । एधेते । एधेयाताम् । एधताम् । ऐधत ।

**१४१ आमो भ्वसोर्लिट्कर्त्तरि ।** एधांचक्रे एधाम्बभूव एधामास । एधिषीष्ट एधिषीयास्तां एधिषीरन् ।

**१४२ नामिनोऽचतुर्णां धो ढः ।** नाम्यन्ताद् धातोः परस्य सीध्वं-लुङ्-लिटां धस्य ढः ।

**१४३ सेटो हलाद् वा ।** एधिषीढ्वं एधिषीध्वं । एधिता । एधिष्यते । ऐधिष्यत । ऐधीष्ट ऐधिषातामू ऐधिषत ।

**१४४ ध्वे सिलोपः ।** ऐधिढ्वम् ।

**अय गतौ ।**

**१४५ अयतौ प्रादे रेफस्य लत्वम् ।** प्लायते पलायते । अयांचक्रे । आयिष्ट । **श्लोकृ संघाते ।** शुश्लोके । **मद तृप्तियोगे ।**

**कमु कान्तौ ।**

**१४६ कमेः स्वार्थे ञिङन्नपि तु वा ।** कामयते । कामयाञ्चक्रे । चकमे । कामयिषीष्ट कमिषीष्ट ।

**१४७ ञेरङ् द्विश्च ।** ञ्यन्ताद् धातोः कर्तरि अङ् लुङि धातोश्च द्वित्वम् । सेरपवादः ।

**१४८ ञेः ।** अनपि ञेर्लोपो न तु इडामन्ताल्वाय्येत्न्विष्णुषु ।

---

१ आते—आतां—आथे—आथां प्रत्ययानाम् ।

**१४९ अङि लघौ ह्रस्व उपधायाः ।** अङि सत्युपधाया ह्रस्वो भवति पूर्वस्यातो लघुनि धात्वक्षरे इकारः ।

**१५० लघोर्दीर्घः ।** अङि सति पूर्वस्य लघोर्दीर्घो भवति लघुनि धात्वक्षरे परे । अचीकमत । ञेरभावे—

**१५१ कमेरङ् द्वित्वं च ।** अचकमत ।

**द्युत** दीप्तौ । द्योतते ।

**१५२ द्युतेः पूर्वस्य संप्रसारणम् ।** दिद्युते ।

**१५३ द्युतादिभ्यो लुङि वा पम् ।** पे ङः । अद्योतिष्ट । अद्युतत् । **ञिमिदा** स्नेहने । **रुच शुभ** दीप्तौ । अरोचिष्ट अरुचत् । **क्षुभ** संचलने । **स्रंसु ध्वंसु भ्रंसु** अधःपतने । अध्वसत् । अध्वंसिष्ट ।

**वृतु** वर्तने । वर्तते ।

**१५४ वृतादिभ्यः स्य-सयोर्वा पं पेऽनिट्त्वं च ।** वर्त्स्यति वर्तिष्यते । अवर्त्स्यत् अवर्तिष्यत । अवर्तिष्ट अवृतत् । **वृधु** वृद्धौ । **स्यन्दू** प्रस्रवणे । **शृधु** शब्दकुत्सायाम् ।

**कृपू** सामर्थ्ये ।

**१५५ कृपो रो लः ।** रस्य लः, ऋकारस्य च ऌकारः । कल्पते ।

**१५६ सि-स्योः ।** सि-स्योरनिटोरुपधाया गुणो न स्यात् । क्लृप्सीष्ट ।

१५७ कृपेस्तादौ पं वा, पेऽनिट्त्वं च । कल्प्ता । आति कल्पिता कल्प्ता । अकल्प्स्यत् अकल्पिष्यत अकल्प्स्यत । अकल्पिष्ट अक्लृप्त । ङे अक्लृपत् । एते द्युतादयो* वृतादयश्च ।

व्यथ दुःख–सञ्चलनयोः ।

१५८ व्यथेर्णादौ पूर्वस्य यस्य इः । विव्यथे १ ।

रमु क्रीडायाम् । तायृ सन्तानपालनयोः ।

१५९ दीप–जन–बुध–पूरि–तायि–प्यायिभ्यो वा इण् तनि कर्तरि । [ सेरपवादः ]

१६० लुक् । इणः परस्य तनो लुक् । अतायि अतायिष्ट ।

षह मर्षणे ।

१६१ इषु–सह–लुभ–रिष–रुषामनपि तस्येड् वा ।

१६२ सहि–वहोरोदवर्णस्य ढलोपे सति । सहिता सोढा २ ।

ईक्ष दर्शनाङ्कनयोः । चेष्ट चेष्टायाम् । त्रपूष् लज्जायाम् ३ । क्षमूष् सहने ४ । टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ ५ । घट चेष्टायाम् । ईह चेष्टायाम् ६ । ऊह वितर्के ७ । षेवृ सेवने ।

---

* श्विता-ञिष्विदा-ञिक्ष्विदा-घुट रुट-लुट-लुठ-णभ-तुभ-स्रम्भो-ऽपि द्युतादयः । १ अव्यथिष्ट “ आतोऽन्तोऽदनतः ” आत्मनेपदस्यानकारादन्तोऽद् भवति अव्यथिषत । २ सेहे । असहिष्ट । ३ त्रेपे । त्रपिता त्रप्ता । ४ चक्षमिषे चक्षंसे । अक्षमिष्ट अक्षंस्त । ५ भ्रेजे बभ्राजे । ६ ऐहिष्ट । ७ ऊहाञ्चक्रे ।

ष्मिङ् ईषद्धसने १ । डीङ् विहायसां गतौ २ । प्रुङ् प्लुङ् च्युङ् गतौ । लोकृ दर्शने । शकि शङ्कायाम् ३ । अकि लक्षणे ४ । ढौकृ गतौ । लघि भोजननिवृत्तौ । बाधृ विलोडने ५ । वदि अभिवादन–स्तुत्योः । मदि मद–स्वप्न–कान्ति–गतिषु । स्पदि किञ्चिच्चलने । मुद हर्षे ६ । यती प्रयत्ने ७ । ञित्वरा संभ्रमे ८।

इत्यात्मनेपदिनः ।

---

## अथोभयपदिनः ।

राजृ दीप्तौ । राजति राजते । अराजीत् अराजिष्टाम् ९ ।

खनु खनने ।

१६३ जन–सन–खनामात्वमनिटि से क्ङिति झसे हे च क्तौ, यादौ क्ङिति वा । खायात् खन्यात् १० ।

हृञ् हरणे । हरति हरते ११ ।

१६४ उः । ऋवर्णस्य सि-स्योरनिटोर्न गुणः । हृषीष्ट ।

१६५ लोपो ह्रस्वाज्झसे । ह्रस्वादुत्तरस्य सेर्लोपो झसे । अहृत ।

---

१ सिष्मिये । अस्मेष्ट । २ अडयिष्ट । ३ शशङ्के । ४ आनङ्के । आङ्किष्ट । ५ बबाधे । बाधिषीष्ट । ६ मुमुदे । ७ येते । ८ तत्वरे । अत्वरिष्ट । ९ रराजे रेजे । अराजिष्ट । १० अखानीत् अखनीत् अखनिष्ट । ११ जहर्थ । ह्रियात् । अहार्षीत् । जह्रे ।

वेञ् तन्तुसंताने।

१६६ वेञो णादौ न संप्रसारणम्। ववौ ववे १।

१६७ वेञो वा वय् णादौ। उवाय।

१६८ ग्रहां क्ङिति च। ग्रहि-ज्या-वयि-व्यधि-वष्टि-वृश्चति-पृच्छति-विचति-भृज्जतीनां संप्रसारणं किति ङिति च। ऊयतुः ऊयुः २।

१६९ वयो यस्य किति लिटि वो वा। ऊवतुः ऊवुः३।

व्येञ् संवरणे। [ व्येञो लिटि नात्वम्। विव्याय विव्ययिथ ].

ह्वेञ् स्पर्धायां शब्दे च।

१७० द्विरुक्तस्य ह्वयतेः संप्रसारणम्। जुहाव ४।

१७१ लिपि–सिचि–ह्वयतीनां ङो लुङि, वाऽऽत्ति। अह्वत् अह्वत अह्वास्त।

लष कान्तौ५। रञ्ज रागे६। यज देवपूजायाम् ७। शप आक्रोशे८। भृञ् भरणे ९। धृञ् धारणे। श्रिञ् सेवायाम् १०।

---

१ वविथ ववाथ। वविषे वविढ्वे वविध्वे। २ उवयिथ ऊये ऊयाते। ३ वायात्। वासीष्ट। अवासीत् अवास्त। ४ जुहविथ जुहोथ जुहुवे। हूयात्। ५ लष्यति लषति। अलाषीत् अलषीत् अलषिष्ट। ६ रजति। ररञ्ज। अराङ्क्षीत् अरङ्क्त। ७ इयाज ईजतुः ईजे। ८ शेपे। ९ बभर्थ बभूव। भृषीष्ट। अभृत। १० शिश्रियें। श्रीयात्। अशिश्रियत्।

णीञ् प्रापणे १। भज सेवायाम् २। डुयाचृ याच्ञायाम्। डुवप् बीज-तन्तुसंताने। डुपचष् पाके ३।वह प्रापणे ४। षच समवाये। बुधिर् बोधने ५।

इत्युभयपदिनः। इति भ्वादयः।

---

## अथादादिषु परस्मैपदिनः।

अद् भक्षणे।

१७२ अदादेर्लुक्। अदादेः परस्यापो लुक्। अत्ति। अद्यात्। अत्तु।

१७३ झसाद्धिर्हेः। झसाद्धकाराच्च परस्य हेर्धिः स्यात्। अद्धि अत्तात्।

१७४ अदेर्दिप्-सिपोरट्। अदः परयोर्दिप्-सिपोरट् स्यात्। आदत्। आदः।

१७५ सि-सयोरदेर्घस्लृ, लिटि तु वा। जघास आद ६।

---

१ अनैषीत् अनेष्ट २ भेजुः बभजुः भेजिथ बभक्थ भेजे। अभाक्षीत् अभक्त। ३ पेचे। अपाक्षीत् अपक्त। ४ उवाह ऊहे। वोढा। ५ अबुधत् अबोधीत् अबोधीः अबोधिष्ट। ६ जक्षतुः जघसिथ जघस्थ आदिथ। अघसत्।

**मा** माने ।

१७६ **आदन्ताद् द्विषो लङोऽन उस् वा** । अमुः अमान् १ । ख्या प्रकथने २ ।

१७७ **अस्यति-वक्ति-ख्यातिभ्यो ङो लुङि सेरपवादः।** अख्यत् । वश कान्तौ ३ ।

१७८ **दिस्योर्हसात्** । हसान्तात्परयोर्दिप्-सिपोर्लोपः । अवट् अवड् । हन् हिंसा-गत्योः । हन्ति ।

१७९ **लोपस्त्वनुदात्त-तनाम्** । अनुदात्तानां ञमान्तानां ४ तनादीनां ५ वनतेश्च ६ ञमस्य लोपो भवति क्ङिति झसे हकारे च । हतः । घ्नन्ति । हन्यात् । हन्तु हतात् हताम् घ्नन्तु ।

१८० **जह्येधि-शाधि** । हन्तेर्जहिरस्तेरेधिः शास्तेः शाधिर्निपात्यते हिविषये । जहि ।

१८१ **पूर्वाद्धन्तेर्हस्य घः** । जघान जघनिथ जघन्थ ।

१८२ **हनो लुङ्-लिङोर्वधः, लुङ्याति वा** । वध्यात् ।

---

१ ममौ । अमासीत् अमासिषुः । २ चख्यौ । ख्येयात् ख्यायात् । ३ कान्तिरिच्छा । वष्टि उष्टः उशन्ति । उड्ढि । उवाश ऊशतुः उवशिथ । अवाशीत् अवशीत् । ४ यमि-रमि-नमि-गमि-हनि-मनीनाम् । ५ तनु-षणु-क्षिणु-क्षणु-ऋणु-तृणु-घृणु-वनु-मनूनाम् । ६ वन संभक्तौ इत्यस्य ग्रहणम् ।

१८३ जनि-वध्योर्न वृद्धिः । अवधीत् १ । रु शब्दे ।

१८४ ओरौ । उकारस्याद्विरुक्तस्यौकारः स्याल्लुकि पिति तिस्मि । रौति ।

१८५ तु-रु-स्तुभ्योऽद्विरुक्तेभ्यो हसादीनां चतुर्णामीड् वा । रवीति रुतः रुवीतः रुवन्ति २ । णु स्तुतौ । नौति ३ ।

इण् गतौ । एति ।

१८६ इणः क्ङिति स्वरे यः । यन्ति । इयाय ।

१८७ इणः किति णादौ पूर्वस्य दीर्घः । ईयतुः । इययिथ इयेथ ।

१८८ इणः सिलोपे गाः । अगात् ४ ।

इक् स्मरणे । (इङिकावध्युपसर्गतो न व्यभिचरतः) अध्येति५।

१८९ इण्वदिकः । अध्यगात् । विद ज्ञाने । वेत्ति ।

१९० विदो नवानां त्यादीनां णवादिर्नवको वा । वेद । विदतुः विदुः ६ ।

---

१ जघ्नतुः । हनिष्यति । २ रुराव रुरविथ । रविता । अरावीत् । ३ नुतः नुवन्ति । अनावीत् । ४ इतः । अयानि । ऐत् ऐः आयम् ऐव । एता । अगातां अगुः । ५ यन्ति । श्रीहेमचन्द्राचार्या इकः क्ङिति स्वरे चतुर्षु वा यकारमिच्छन्ति, तेन तेषां मते यन्ति इयन्ति इति रूपद्वयम् । अध्येता । ६ वित्तः विदन्ति । वेद इत्यादौ परोक्षार्थत्वाभावान्न द्विः । वेत्थ ।

**१९१ वेत्तेर्लोट्यांम्गुणाभावः करोत्यनुप्रयोगश्च वा ।** विदांकरोतु विदांकुरुतात् विदांकुर्वन्तु १ । अवेत् अवेद् ।

**१९२ दः सः ।** पदान्ते दस्य सो वा सिपि । अवेः अवेत् । विवेद ।

**१९३ आमि विदेर्न गुणः ।** विदांचकार २ ।

**अस् भुवि ।** अस्ति ।

**१९४ नमसोऽस्य ।** प्रत्ययस्य नमोऽस्तेश्चाकारस्य लोपो भवति ङिति । स्तः सन्ति ।

**१९५ सि सः ।** अस्तेः सस्य लोपः स्यात् सिपि । असि स्थः स्थ ।

**१९६ अस्तेरीट् ।** अस्तेर्दिप्-सिपोरीट् स्यात् । आसीत् ३ ।

**१९७ अस्तेरनपि भूः ।** बभूवेत्यादि । **मृजूष् शुद्धौ ।**

**१९८ मृजेर्वृद्धिः ।** क्ङिति स्वरे वा । मार्ष्टि मृष्टः मृजन्ति मार्जन्ति ४ । **वच परिभाषणे** ५ । ( नहि वचिरन्तिपरः ) ।

**१९९ वचेरुम् ।** अवोचत् ।

**रुदिर्** अश्रुविमोचने ।

---

१ 'तनादेरुप् कर्तरि चतुर्षु' 'डित्यदुः' 'कुरु-छुरोर्न दीर्घः' 'ओर्वा हेः' इति सूत्राणि पश्यत स्वादि–तनादिगणे । २ वेत्तु । अवेदीत् । ३ स्यात । सन्तु । आसीः । ४ मृड्ढि । अमार्ट् अमार्ड् । ममार्जिथ ममार्ष्ठ । मार्जिता मार्ष्टा । ५ वक्तः । उवाच उवचिथ उवक्थ ।

**२०० रुदादेश्चतुर्णां ह्वसादेः ।** रुदादेः परस्य हकारवसादेः प्रत्ययस्येट् स्यात् चतुर्षु । रोदिति रुदितः ।

**२०१ रुदादेर्दिस्योरीडटौ ।** अरोदीत् अरोदत् १। ञिष्वप् शये । स्वपिति २ । श्वस् प्राणने ३ ।

अन् प्राणने ।

**२०२ प्रादे रेफादनितेर्नस्य णत्वम् ।** प्राणिति ४ ।

जक्ष भक्षणे ।

**२०३ जक्षादेरन्तोऽदन उस् ।** जक्ष–जागृ–दरिद्रा–शास्–चकासृभ्यः परस्यान्तोऽत्, अन उस् स्यात् । जक्षति । अजक्षुः ५ ( इति रुदादयः ) ।

जागृ निद्राक्षये ६ ।

**२०४ जागर्तेर्वीण्-णब्-ङिद्भिन्नेषु गुणः ।** जजागरतुः । जागर्यात् । अजागरीत् । दरिद्रा दुर्गतौ ।

**२०५ दरिद्रातेरिदालोपश्च ङिति ।** दरिद्रातेरातो लोपो ङिति स्वरे, इकारश्च ङिति हसे । दरिद्रितः ।

---

१ रुरोद । रोदिता । अरुदत् अरोदीत् । २ सुष्वाप सुष्वपिथ सुष्वप्थ । स्वप्ता । ३ अश्वसीत् । ४ प्राण । प्राणीत् । ५ जक्षिति जक्षितः । अजक्षीत् अजक्षत् । जजक्ष । जक्षिष्यति अजक्षीत् । ६ जागर्त्ति जाग्रति । " उसि गुणः " नाम्यन्तस्य धातोर्गुणः स्यादनुप्रत्ययादेशे उसि परे । अजागरुः । जागराञ्चकतुः ।

**२०६ दरिद्रातेरनप्यालोपः, सौ वा, णब्वुणनिट्सयुट्सु न** । ददरिद्रौ । अदरिद्रीत् । अदरिद्रासीत् १ ।

**शासु** अनुशिष्टौ । शास्ति ।

**२०७ शासेरिः** । शासेरातो क्ङिति हसे ङे च इद् भवति । शिष्टः २ ।

**२०८ दिपि सस्य तः, सिपि वा** । धातोः । अशात् अशाद् । अशात् अशाद् अशाः । अशिषत् । **चकासृ** दीप्तौ ।

**२०९ धे सलोपः** । चकाधि ३ । **ई-वी** गतौ । एति । ऐषीत् ४ । **या** प्रापणे । **वा** गतिगन्धनयोः ५ । **रा** दाने । **ला** ग्रहणे ६ । **दाप्** लवने ७ । **श्रा** पाके । **द्रा** कुत्सायाम् । **ष्णा** शौचे । **पा** रक्षणे ८ । **भा** दीप्तौ ९ ।

इति परस्मैपदिनः ।

---

१ दरिद्रति । दरिद्रिहि । अदरिद्रात्–द् । ददरिद्रतुः दरिद्रांचकार । दरिद्रिता । २ शासति । शिष्यात् । शाधि । शशास । शिष्यात् । शासिता । ३ चकास्ति । चकासांचकार । अचकासीत् । ४ इयन्ति । अयाञ्चकार एता । वियन्ति । विवाय । ५ अवान् अवुः । ६ ललौ । अलासीत् अलासिष्टाम् । ७ ददौ । दायात् । अदासीत् । ८ पाति । पपौ । पायात् । अपासीत् । ९ अभान् अभुः । बभौ ।

## अथादादिष्वात्मनेपदिनः ।

चक्षिङ् व्यक्तायां वाचि । चष्टे । चक्षीत । चष्टाम् । अचष्ट१ ।

२१० चक्षिङोऽनपि ख्याञ्-क्शाञौ, णादौ तु वा । चख्यौ चख्ये २ । चक्शौ चक्शे । चचक्षे । अख्यत् अक्शासीत् अक्शास्त । ईड् स्तुतौ ।

२११ ईडीशिभ्यां स-ध्वयोरिट्, न तु लङि । ईडिषे ईडिध्वे ३ । ईश ऐश्वर्ये । ईशिषे ईशिध्वे ४ ।

षूङ् प्राणिप्रसवे ।

२१२ सुवो न गुणश्चतुर्षु । सुवै सुवावहै सुवामहै ५ ।

शीङ् स्वप्ने ।

२१३ शीङो गुणश्चतुर्षु । शेते । शयाते ।

२१४ शीङोऽतो रुट् । शेरते ६ । इङ् अध्ययने अधिपूर्वः ७ ।

---

१ चक्षाते चक्षते चक्षे । चक्षाताम् चक्ष्व चड्ढ्वम् । २ ञित्त्वादुभयपदम् । ख्येयात् ख्यायात् । अख्यत । ३ ईट्टे ईडते । ऐट्ट ऐड्ढ्वम् । ईडांचक्रे । ईडिता । ऐडिष्ट । ४ ऐष्ट । ईशिषीष्ट । ईशिष्यते । ५ "नानप्योर्वः" अनपि विषये उवर्णस्य वत्वं न सुषुवे सुषुविषे । सविषीष्ट सोषीष्ट । सविष्यते सोष्यते । असविष्ट असोष्ट । ६ शये । शयीत । शिश्ये । शयिता । अशयिष्ट । ७ अधीते अधीयाते अधीयते । अधीयीत । अध्ययै । अध्यैत । प्रथमं इयादेशः ततो अटौ अध्यैयाताम् । "आतोऽन्तोऽदनतः" अध्यैयत ।

२१५ इङो णादौ गाङ्। अधिजगे। अध्येषीष्ट।

२१६ इङो वा गीर्लुङ्लृङोर्गुणाभावश्च। अध्यगीष्यत अध्यैष्यत। अध्यगीष्ट अध्यैष्ट। ईर गतौ कम्पने च १। आस उपवेशने २। इत्यात्मनेपदिनः।

---

## अथादादिषूभयपदिनः।

द्विष अप्रीतौ। द्वेष्टि द्विष्टे ३। ब्रूञ् व्यक्तायां वाचि।

२१७ अब्रादावीं पिति तिस्म। ब्रुव ईप्रत्ययः स्यात् पिति तिस्म अब्रादौ। ब्रवीति।

२१८ ब्रुव आहश्च पञ्चानाम्। ब्रुवः परेषां तिबादीनां पञ्चानां णबादयः पञ्चादेशा वा स्युः, ब्रुव आहश्च। आह आहतुः आहुः।

२१९ तस्थे। आहो हस्य तः स्यात् थे परे। आत्थ आहथुः।

---

१ ईर्त्ते। ऐर्त ऐर्महि। ईराञ्चक्रे। ईरिषीष्ट ईरिष्यते। ऐरिषत। २ आस्ते आस्से 'धे सलोपः' आध्वे। आस्ताम् आस्स्व। आस्त आसि। आसांचक्रे। आसिषीष्ट। आसिष्ट आसिषि। वस आच्छादने। वस्ते वध्वे। वसताम्। अवस्थाः। ववसे। वसितासे। अवसिष्ट। ३ द्विषन्ति द्वेक्षि। द्विड्ढि द्वेषाणि। अद्वेट्-ड् अद्विषुः अद्विषन्। दिद्वेष। द्वेक्ष्यति। अद्विक्षत्। द्विषाते द्विक्षे। द्विड्ढ्वं द्वेषै। दिद्विषे। द्विक्षीष्ट। द्वेष्टा। अद्विक्षत अद्विक्षन्त।

२२० ब्रुवोऽनपि वच्। उवाच ऊचे। अवोचत १।

ष्टुञ् स्तुतौ।

२२१ स्तु-सु-धूञां पे सेरिट्। अस्तावीत् अस्तोष्ट२।

दिह उपचये।

२२२ दुह-दिह-लिह-गुहूभ्यः सको लुग्वा वकार-तवर्गयोराति। अधिक्षत अदिग्ध ३। दुह प्रपूरणे ४। लिह आस्वादने ५।

ऊर्णुञ् आच्छादने।

२२३ ऊर्णोतेर्वा वृद्धिर्हसादौ पिति चतुर्षु। ऊर्णोति ऊर्णुतः ऊर्णुवन्ति। ऊर्णुते। ऊर्णुयात्। ऊर्णुवीत। ऊर्णोतु ऊर्णौतु। ऊर्णुहि।

---

१ ब्रूतः ब्रुवन्ति। ब्रवाणि। अब्रवीत्। ब्रूते। ब्रवै। अब्रूत। ऊचतुः उवचिथ उवक्थ। उच्यात्। अवक्ष्यत्। 'वचेरुम्' अवोचत्। वक्षीष्ट। २ स्तौति स्तवीति स्तुवन्ति स्तुथः स्तुवीथः। स्तौतु स्तवीतु स्तुहि स्तुवीहि स्तवानि। अस्तौत् अस्तवीद् अस्तवम्। तुष्टाव तुष्टविथ तुष्टोथ। स्तूयात्। स्तोता। स्तुते स्तुवीते स्तुवते। स्तुवीत। तुष्टुवे। स्तोषीष्ट। ३ देग्धि दिग्धः धेक्षि। दिग्धि देहाव। दिदेहिथ। धेक्ष्यति। अधिक्षत्। दिग्धे धिक्षे। धिक्ष्व देहै। अदिहत। दिदिहे। धिक्षीष्ट। ४ अधुक्षत्। अधुक्षत अदुग्ध। ५ लेढि लीढः लेक्षि। अलिक्षत्। लीढे लीढ्वे। लिक्षीष्ट। लेढा। लेक्ष्यते। अलिक्षत अलीढ।

२२४ ऊर्णोतेर्गुणो दिस्योः । वृद्धेरपवादः । और्णोत् । और्णोः ।

२२५ ऊर्णोतेराम् न ।

२२६ स्वरादेः परः । स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तः सस्वरो द्विर्भवति ।

२२७ स्वरात्पराः संयोगादयो वनदरा द्विर्न । ऊर्णुनाव । ऊर्णुनुवतुः ।

२२८ ऊर्णोतेरिडादिप्रत्ययो वा ङित् । ऊर्णुनुविथ ऊर्णुनविथ । ऊर्णुविता ऊर्णविता । और्णुवीत् और्णुविष्टाम् ।

२२९ ऊर्णोतेर्वा वृद्धिः सौ पे । पक्षे वा गुणः । और्णावीत् और्णाविष्टाम् और्णवीत् और्णुविष्ट १ । इत्युभयपदिनः ।

इत्यदादयः ।

---

## अथ ह्वादिषु परस्मैपदिनः ।

हु दानादनयोः ।

२३० ह्वादेर्द्विश्च । हुरित्यादेरुत्पन्नस्यापो लुक्, धातोश्च द्वित्वम् । जुहोति जुहुतः ।

२३१ द्वेः । द्विरुक्तात्परस्यान्तोऽत् स्यात् । जुह्वति ।

---

१ ऊर्णोति । ऊर्णुनुवे ऊर्णुनुविरे । और्णविष्ट ।

२३२ होर्हेर्धिः । जुहुधि ।

२३३ अन्न उस् । द्विरुक्तादन उस् स्यात् । (उसि गुणः) अजुहवुः ।

२३४ भी-ह्री-भृ-हुवामाम् वा स च लुग्वत् । जुहवाञ्चकार जुहाव । 'ये' हूयात् । होता । होष्यति । अहौषीत् ।

ञिभी भये । बिभेति ।

२३५ भी-हाकोरिद् वा ङिति हसे । बिभितः बिभीतः बिभ्यति । बिभयांचकार बिभाय अभैषीत् १ । पॄ पालन-पूरणयोः ।

२३६ ऋप्रोरिः पूर्वस्य । ऋप्रोः पूर्वस्यात इत्स्याल्लुकि २। पिपर्ति ।

२३७ पोरुर् । पवर्गात् वकाराच्च ॠत उर् स्यात्३। पिपूर्तः पिपुरति । पिपूर्यात् । पिपर्तु पिपूर्तात् पिपूर्ताम् पिपुरतु । 'दिस्योर्हसात्' अपिपः । पपार पपरतुः पपरिथ । पूर्यात् । परिता परीता । परिष्यति परीष्यति । अपारीत् । ह्रस्वान्तोऽप्ययम् । अपार्षीत् ४ ।

ओहाक् त्यागे । जहाति ।

२३८ द्वेस्तौ । द्विरुक्तस्य धातोरातो लोपो ङिति स्वरे, ईकारश्च ङिति हसे । जहितः जहीतः ।

---

१ बिभीहि बिभिहि । अबिभेत्-द् अबिभयुः । बिभयिथ बिभेथ बिभीव । भीयात् । भेता । अभैषीः । २ पॄपृ इत्युभयोरपि ग्रहणम् । ३ अगुणवृद्धिविषये । ४ पिपृतः पिप्रति । अपिपरुः ।— पपर्थ । प्रियात् । परिष्यति । अपार्ष्टाम् ।

२३९ जहातेर्यादावालोपः । जह्यात् ।

२४० ईर्वा हौ। जहातेर्हौ परे ईर्वा स्यात्। जहाहि जहीहि जहिहि१ । ऋ गतौ ।

२४१ असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ । इयर्त्ति । इयृतः । इय्रति २। ह्री लज्जायाम्। जिह्रेति ३। इति परस्मैपदिनः।

---

## अथात्मनेपदिनः।

**ओहाङ् गतौ ।**

२४२ भृञां लुकि। डुभृञ्–हाङ्–माङां पूर्वस्यात इत् लुकि।जिहीते ४। माङ् माने। मिमीते५। इति आत्मनेपदिनः।

---

१ जहति। हेयात्। अहासीत् । २ इयृहि । इयराणि। ऐयः ऐयृताम् ऐयरुः ऐयरम्। आर 'गुणोऽर्तिसंयोगाद्योः' आरतुः आरिथ आरिव । अर्यात्। अर्ता । अरिष्यति । आरत् । ३ जिह्रियति । जिह्रीयात्। जिह्रयाणि । अजिह्रेत्–द् अजिह्रयुः अजिह्रयम् । जिह्रयाञ्चकार जिह्राय जिह्रियतुः जिह्रयिथ जिह्रेथ जिह्रियिव । ह्रीयात् । ह्रेता । अह्रैषीत् । ४ जिहते । जिहीत । जिहीस्व जिहै। अजिहाताम् अजिहि। जहे । अहास्त। ५ अमिमीत अमिमत । ममे । माता । अमास्त अमासाताम् ।

## अथोभयपदिनः ।

डुभृञ् धारण-पोषणयोः । बिभर्ति१। डुदाञ् दाने। ददाति।

२४३ दादेः । द्विरुक्तानामपिद्दा–धामातो लोपः स्यात् ङिति । दत्तः ।

२४४ दां हौ २ । अपिद्दा–धामेत्वं पूर्वस्य च लोपो हौ। देहि ।

२४५ अपिद्दा–धा–स्थामात इत् सौ सेङित्वमाति [न तु दिङः]। अदित ३ । डुधाञ् धारण–पोषणयोः । दधाति ।

२४६ पूर्वस्य ङिति झसे धः। झभान्तस्य पूर्वस्य दस्य धः स्यात् ङिति झसे । धत्तः ४ । णिजिर् शौच–पोषणयोः ।

२४७ निजां गुणः। निज–विज–विषां पूर्वस्य गुणः स्याल्लुकि । नेनेक्ति ।

---

१ बिभ्रति। बिभृयात्। बिभराणि । अबिभः। बिभराञ्चकार । बभार बभर्थ बभृव। भ्रियात्। भरिष्यति अभार्षीत्। बिभृते बिभ्रते। बिभ्रीत। बिभरै । अबिभ्रि । बिभराञ्चक्रे बभ्रे । भृषीष्ट । अभृत ।
२ बहुवचनं दाण्–देङ्–दो–धेटां ग्रहणार्थमुपन्यस्तम् । ३ ददति। अददाः । ददिथ ददाथ । देयात् । अदात् । दत्ते दद्वे। ददावहै । अददाताम् । ददे । ४ धेयात् । धास्यन्ति । अधात । धत्ते दधते । दधे अधित ।

२४८ द्वेः स्वरेऽपि नोपधाया गुणः । नेनिजानि । नेनिजै १ । विजिर् पृथग्भावे । वेवेक्ति । वेविजै २ । विष्लृ व्याप्तौ । वेवेष्टि । विवेष । अविषत् ३ । इत्युभयपदिनः ।

इति ह्वादयः ।

---

## अथ दिवादिषु परस्मैपदिनः ।

दिवु क्रीडादौ ४ ।

२४९ दिवादेर्यः । कर्तरि चतुर्षु । दीव्यति ५ । षिवु तन्तुसन्ताने । सीव्यति ६ । नृती गात्रविक्षेपे ।

२५० नृत-तृद-चृत-छृद-कृन्त्योऽसेः सादेरिड् वा ।

---

१ नेनेक्षि । अनेनिजम् । नेक्ष्यति । अनैक्षीत् अनिजत् । नेनिक्ते नेनिजाते । नेनिजीत । निनिजे । निक्षीष्ट । अनिक्त । २ वेवेक्षि । वेविग्धि । अवेवेक्-ग् । अवेक्ष्यत् । अवैक्षीत् अविजत् । ३ वेवेक्षि । वेविड्ढि वेविषाव । विवेषिथ । वेष्टा । वेक्ष्यति । वेविष्टे । विविषे । विक्षीष्ट । आति तु सक् अविक्षत । ४ आदिशब्दग्रहणाद् विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-इच्छा-स्वप्न-गत्यर्थेष्वपि दिवुधातुः । ५ ' य्वोर्वि हसे ' अदीव्यत्-द् । दिदेव । अदेवीत् । ६ ( सिवु-स्वञ्जादेरड्व्यवधाने वा षः ) न्यषेवीत् न्यसेवीत् ।

नर्तिष्यति नर्त्स्यति १ । त्रसी उद्वेगे । त्रस्यति त्रसति २ । क्षिपू प्रेरणे ३ । जॄषिर् वयोहानौ । जीर्यति ४ । शो तनूकरणे ।

२५१ ध्योः । यप्रत्यये धातोरोतो लोपः स्यात् ५ । छो छेदने । छ्यति । षो अन्तकर्मणि । स्यति ६ । दो अवखंडने । द्यति ७ । साध संसिद्धौ ८ । व्यध ताडने । विध्यति ९ । पुष पुष्टौ १० । तुष तुष्टौ । शुष शोषणे । दुष वैकृत्ये । श्लिष आलिङ्गने ११ ।

२५२ श्लिषेरालिङ्गने सक् लुङि । ङोऽपवादः । अश्लिक्षत्कन्यां चैत्रः । अनालिङ्गने तु समश्लिषज्जतु काष्ठम्। ञिष्विदा

---

१ अनर्तीत् । २ तत्रास 'फण–राजृ०' त्रेसतुः तत्रसतुः । ३ अक्षैप्सीत् । ४ 'ऋ-संयोगाण्णादिरकित्' जेरतुः जजरतुः । 'ॠत इर्' जीर्यात् । 'वृङ्-वृञ्०' जरीता जरिता । 'इरितो वा ङः' अजरत् अजारीत् । ५ श्यति । श्येत् श्येयुः । श्यानि । शशौ शशिथ शशाथ । 'शा-छा-सा०' अशात् अशासीत् । ६ सेयात् । ७ देयात् । अदात् । ८ साद्धा । असात्सीत् । ९ 'ग्रहां क्ङिति' विध्येत् । विव्याध विविधतुः । विध्यात् । व्यद्धा । अव्यात्सीत् अव्याद्धाम् । १० पुपोष । पोष्टा । अपोक्ष्यत् । 'लित्पुषादेर्ङः' अपुषत् । ११ शिश्लेष । श्लेष्टा । श्लेक्ष्यति ।

गात्रप्रक्षरणे १ । क्रुध क्रोधे २ । क्षुध बुभुक्षायाम् । शुध शुद्धौ । षिधु संसिद्धौ ३ । णश अदर्शने ४ ।

२५३ मस्जि—नशोर्झसे नुम् । ननंष्ठ । नंष्टा । अनशत् ( ङे नशेरत एत्वं वा वाच्यं ५ ) । तृप प्रीणने ६ । दृप गर्वे । द्रुह जिघांसायाम् ७ । मुह वैचित्ये । स्निह प्रीतौ ।

शमु उपशमे ।

२५४ शमां दीर्घः ये । शाम्यति ८ । तमु काङ्क्षायाम् । दमु शमने । श्रमु तपसि खेदे च । भ्रमु चलने ९ । क्षमू सहने १० । क्लमु ग्लानौ ११ । मदी हर्षे ( शमादयोऽष्टौ ) ।

---

१ स्विद्यति । सिष्वेद । स्वेत्ता । २ चुक्रोध । क्रोत्स्यति । ३ सिध्यति । सिषेध । सेद्धा । असिधत् । ४ ननाश नेशिथ नेशिव नेश्व । नशिता । नशिष्यति 'स्वरति—सूति०' 'छ्शषराजादेः षः' नङ्क्ष्यति । ५ अनेशत् । इदं वार्त्तिकं केचिन्न मन्यन्ते । ६ ततर्प ततर्पिथ 'कृषादीनां वा' तत्रप्थ ततर्प्थ ततृपिव ततृप्व । तर्पिता त्रप्ता तर्प्ता । अतर्पीत् अत्राप्सीत् अतार्प्सीत् अतृपत् । ७ द्रुह्यति । दुद्रोहिथ 'तथोर्धः' 'ढि ढो लोपो दीर्घश्च' 'द्रुहादेर्वा घः' दुद्रोढ दुद्रोग्ध दुद्रुहिव दुद्रुह्व । द्रोहिष्यति ध्रोक्ष्यति । अद्रुहत् । ८ शेमतुः । ९ 'भ्राश-म्लाश-भ्रमु०' भ्राम्यति भ्रमति । बभ्रमतुः भ्रेमतुः । १० चक्षमिथ चक्षन्थ चक्षमिव चक्षण्व । क्षमिता क्षन्ता । अक्षमत् । ११ क्लाम्यति 'ष्ठिवु-क्लम्वाचमां दीर्घः' क्लामति । क्लमिष्यति ।

असु क्षेपणे ।

२५५ अस्यतेस्थुक् ङे । आस्थत् १ । तसु क्षये २ । लुठ विलोडने । भ्रंशु अधःपतने ३। कृश तनूकरणे ४ । ञितृष पिपासायाम् ५ । हृष तुष्टौ ६ । कुप कोपे । लुभ गार्ध्ये । क्षुभ संचलने । क्लिदू आर्द्रीभावे ७ । ञिमिदा स्नेहने ।

२५६ मिदेर्गुणो ये । मेद्यति ८ । ऋधु वृद्धौ ९ । इति पुषादयः १० । इति परस्मैपदिनः ।

---

## अथ दिवादिष्वात्मनेपदिनः ।

षूङ् प्राणिप्रसवे । सूयते ११ । दूङ् परितापे १२ । दीङ् क्षये ।

---

१ आस आसिथ । आसिष्यत् । 'अस्यति-वक्ति०' आस्यताम् । २ तेसतुः। अतसीत् अतासीत् । ३ बभ्रंशिथ । भ्रश्यात् । अभ्रशत् । ४ कर्शिता । ५ततर्षिथ । ६ हर्षिता । ७ क्लेदिता क्लेत्ता । ८ अमिदत् । ९ आर्ध्यत् । आनर्ध । आर्धत् । १० केचित् शमादीनां कतिपयधातूनां पुषादित्वं नेच्छन्ति, तेन तन्सते अशमीत् आर्धीत् इत्यादिरूपाणि भवन्ति। ११ सुषुवे सुषुविवहे । 'स्वरति-सू त-सूयति०' सविषीष्ट सोषीष्ट। सविष्यते सोष्यते । असविष्ट असोष्ट । १२ दविषीष्ट । दविता । अदविष्ट ।

२५७ दीङो युट् क्ङिति स्वरस्य । दिदीये ।

२५८ दीङो गुणवृद्धिविषये क्यपि चात्त् । अदास्त १ । डीङ् विहायसां गतौ २ । व्रीङ् वरणे ३ । (स्वादय ओदितः) । पीङ् पाने ४ । प्रीङ् प्रीतौ ५ । जनी प्रादुर्भावे ।

२५९ ज्ञा-जनोर्जा । चतुर्षु । जायते । 'दीप-जन-बुध-पूरि-तायि-प्यायिभ्यो वा इण्' । 'तलो लुक्' । अजनि ६ । दीपी दीप्तौ ७ । पूरी आप्यायने ८ । तूरी गतित्वरण-हिंसनयोः । तप ऐश्वर्ये ९ । पद गतौ १० ।

२६०. पदेरिण् तनि । अपादि । खिद दैन्ये ११ । विद

---

१ दासीष्ट । दाता । दास्यते । २ डिड्ये । डयिषीष्ट । अडयिष्ट । शकुनिरुड्डीयते । ३ विव्रिये । व्रेषीष्ट । अव्रेष्ट । ४ पिप्ये । पेता । अपेष्ट । ५ पिप्रिये । अप्रेष्ट । ६ 'गमां स्वरे', 'जनोर्ज्ञः' जज्ञे । जनिषीष्ट । जनिष्यते । अजनिष्ट । श्रीवर्द्धमानस्य सर्वज्ञत्वमजनि, अजनिष्ट वा । ७ दीप्यते । दीपिता । अदीपि अदीपिष्ट । ८ पूर्यामहे । पुपूरे । अपूरि अपूरिष्ट । ९ तेपे । तप्सीष्ट । अतप्त । चन्द्रगुप्तोऽतप्त । १० पद्यते । पेदे । पत्सीष्ट । ११ खिद्यते । चिखिदे । खेत्ता । अखित्त ।

सत्तायाम् १ । बुध अवगमने २ । युध प्रहारे । मन ज्ञाने ३ । युज् समाधौ ४ । सृज विसर्गे ५ । लिश अल्पीभावे ६ । इति आत्मनेपदिनः ।

---

## अथ दिवादिषूभयपदिनः ।

मृष तितिक्षायाम् । मृष्यति मृष्यते ७ । रञ्ज रागे ८ । शप आक्रोशे ९ । शक मर्षणे १० । णह बन्धने ११ । इत्युभयपदिनः ।

इति दिवादयः ।

---

१ विद्यन्ते । विविदे । वित्सीष्ट । वेत्ता । अवित्थाः । २ बुबुधिषे । भुत्सीष्ट । भोत्स्यते । अभुत्साताम् । ३ मन्येते । मेनिरे । मंसीष्ट । मन्ता । अमंस्त अमंसत अमंस्वहि । मन्येऽहं यदद्य वृष्टिर्भविष्यति । ४ युक्षीष्ट । अयोक्ष्यत । अयुक्त अयुक्षाताम् । ५ सृज्येत । ससृजे । 'रारो ज्ञसे दृशाम्' स्रष्टा । स्रक्ष्यते । असृष्ट । ६ लिक्षीष्ट । लेष्टा । 'हशषान्तात् सक्' अलिक्षत । ७ ममृषे । अमर्षिष्ट । ८ रज्यति । ररञ्ज । रज्यते । ररञ्जे । रङ्क्षीष्ट । अरङ्क्त । ९ शेपे । अशप्त । १० शेके । शक्षीष्ट । पुषादित्वाद् ङः अशकत् । ११ नह्यति । नेहतुः । अनात्सीत् । नेहे । नत्सीष्ट । नद्धा । अनद्ध ।

# अथ स्वादिषूभयपदिनः १ ।

षुञ् अभिषवे २ ।

२६१ **स्वादेर्नुः** । स्वादेर्नुः प्रत्ययः स्यात् कर्तरि चतुर्षु ।

२६२ **नूपः** । नुप्रत्ययस्य ३ च गुणः स्यात् पिति । सुनोति ।

२६३ **ओर्म्मोर्वा लोपः** । असंयोगपूर्वस्य प्रत्ययस्योकारस्य लोपो वा स्याद् वमयोः । सुन्वः सुनुवः ।

२६४ **ओर्वा हेः** । असंयोगपूर्वात्प्रत्ययोकाराद्धेर्लुक् स्यात् । सुनु ४ । **चिञ्** चयने ।

२६५ **चिनोतेः स-णादौ किर्वा** । चिकाय चिचाय ५ । **स्तृञ्** आच्छादने ६ ।

---

१ स्वादिगणे षुञ्धातोरादित्वान्नित्यमुभयपदित्वाच्चात्र प्रथममुभयपदिनो धातवः, एवं रुधादिष्वपि ज्ञेयम् । २ स्नान—पीडन-मन्थनार्थकोऽभिषवः । स्नानार्थकोऽयमकर्मक इति चन्द्रप्रभाकारः । ३ उप्रत्ययस्य । ४ सुनवानि । सुषाव । सोष्यति । 'स्तु—सु—धूञ्भ्यां पे सेरिट्' असावीत् । सुनुते सुन्वते । सुनवामहै । सुषुवे । सोषीष्ट । असोष्ट । ५ चिनोति चिनुते । चिचयिथ चिचेथ । अचैषीत् । चिक्ये चिच्ये । अचेष्ट । ६ स्तृणोति । तस्तार 'गुणोऽर्त्तिसंयोगाद्योः' तस्तरतुः तस्तर्थ । स्तर्यात् । अस्तार्षीत् । स्तृण्वीत ।

२६६ ऋदन्तात्संयोगादेः सि-स्योरिड् वाऽऽति। स्तरिषीष्ट स्तृषीष्ट । अस्तरिष्ट अस्तृत । वृञ् वरणे ।

२६७ वृञस्थप इट् । ववरिथ ।

२६८ वृङ्-वृञ्-ॠदन्तात् सि-स्योरिड् वाऽऽति । वरिषीष्ट वृषीष्ट १ । धुञ् कम्पने २ । इत्युभयपदिनः ।

---

## अथ स्वादिषु परस्मैपदिनः ।

दुदु उपतापे । आप्लृ व्याप्तौ ३ । शक्लृ शक्तौ ४ । ञिधृषा प्रागल्भ्ये ५ । क्षि हिंसायाम् । दम्भु दम्भे ६ ।

---

१ वृणोति । ववार वव्रतुः ववृव । ' वृङ्-वृञ्-ॠदन्तानां वा ' वरीता वरिता । अवारीत् अवारिष्टाम् । अवरीष्ट अवरिष्ट अवृत । २ दुधाव । धोष्यति । अधौषीत् । धोषीष्ट । दीर्घोकारान्तोऽप्ययेषस्तदा ' स्वरति-सूति० ' दुधविथ दुधोथ दुधुविव । धविता धोता ।' अधावीत् । धविषीष्ट धोषीष्ट । अधविष्ट अधोष्ट । ३ आप्नोति । आप्नोत् आप्नुवन् । आप । आप्ता । आपत् । ४ शेकिथ शशक्थ । शक्ष्यति । अशकत् । ५ धृष्णोति । दधृषतुः । धर्षिता । अधर्षीत् । ६ दभ्नोति ।

२६९ श्रन्थि-ग्रन्थि-दम्भिभ्यो लिटः कित्त्वं वा, दम्भे-र्लिट्येत्व-पूर्वलोपौ च १ । ददम्भ देभतुः ददम्भतुः । इति परस्मैपदिनः ।

---

## अथ स्वादिष्वात्मनेपदिनौ ।

अशूङ् व्याप्तौ । अश्नुते २ । ष्टिघ आस्कन्दने । स्तिघ्नुते ३ । इत्यात्मनेपदिनौ ।

इति स्वादयः ।

---

## अथ रुधादिषूभयपदिनः ।

रुधिर् आवरणे ।

२७० रुधादेर्नम् । रुधादेर्नम् स्यात् कर्तरि चतुर्षु ।

---

१ ये कित्प्रत्ययास्तेषामेव विकल्पेन कित्त्वमिति केचित् । पितामपि कित्त्वमिति सुधाकरः । दम्भधातोर्लिटः कित्प्रत्ययानां नित्यं कित्त्वं थपश्च वा, किति लिटि एत्व-पूर्वलोपौ च; तथा श्रन्थ-ग्रन्थाभ्यां लिटः कित्प्रत्ययानां सेटः थपश्च वा कित्त्व, किति एत्व-पूर्वलोपौ चेति श्रीहेमचन्द्राचार्यस्याशयः । २ अश्नुवते । अश्नवै । आनशे । अशिषीष्ट अक्षीष्ट । आशिष्यत आक्ष्यत । आशिष्ट आष्ट । ३ तिष्टिघे । अस्तेघिष्ट । अयं धातुः कपुस्तके नास्ति ।

रुणद्धि १। **भिदिर्** विदारणे । अभिदत् अभैत्सीत् २ । **छिदिर्** द्वैधीकरणे। अच्छिदत् अच्छैत्सीत् ३। **रिचिर्** विरेचने । रिणक्ति। अरिचत् अरैक्षीत्। अरिक्त४। **विचिर्** पृथग्भावे । विङ्क्ते अविचत् अवैक्षीत् । अविक्त । **क्षुदिर्** संचूर्णे । अक्षुदत् अक्षौत्सीत् । अक्षुत्त । **युजिर्** योगे । अयुजत् अयौक्षीत्। अयुक्त। **उछृदिर्** दीप्ति-देवनयोः । **उतृदिर्** हिंसाऽनादरयोः । अतृदत् ५ । **इत्युभयपदिनः ।**

---

## अथ रुधादिषु परस्मैपदिनः ।

शिष्लृ विशेषणे ६ । **पिष्लृ** संचूर्णे ७। **भञ्जो** आमर्दने ८।

---

१ 'नमसोऽस्य' रुन्द्धः रुन्धन्ति । रुन्ध्यात् । रुणद्धु रुन्द्धात् रुणधानि । अरुणत्–द् । रुरोध । रोद्धा । अरौत्सीत् 'इरितो वा ङः' अरुधत् । रुन्धे रुन्धते । रुणधै । रुत्सीष्ट । रोत्स्यते । अरुद्ध अरुत्सत । २ भिनत्तु । अभेत्स्यत् । भिन्त्स्व । अभिन्त । बिभिदे । ३ छर्दिषीष्ट छृत्सीष्ट । ४ रिणक्षि । अरिणक्–ग् । अरिणचम् । रेक्ता । रिक्षीष्ट । रेक्ष्यते । ५ तृणत्ति। ततृदतुः । तर्दिष्यति तर्त्स्यति । अतर्दीत । तृन्ते तृन्ते । ततृदिरे । अतर्दिष्ट । ६ शिनष्टि शिष्टः । अशिनट्–ड । शिशेष । शेक्ष्यति। अशिषत् । ७ पिण्डि । अपिपत्। ८ भनक्ति । भञ्जन्तः । भङ्ग्धि । भनजानि । अभनजम् । बभञ्ज बभञ्जतुः । भज्यात् । भङ्क्ता । अभाङ्क्षीत् अभाङ्क्ताम् ।

**भुज** पालनाभ्यवहारयोः १ । हिसि हिंसायाम् ।

२७१ **नमः**। नमः परस्य नस्य लोपः स्यात् । हिनस्ति २।

अञ्जू व्यक्तौ ३ ।

२७२ अञ्जेः सेर्नित्यमिट् । आञ्जीत् । इति **परस्मैपदिनः**।

---

## अथ रुधादिष्वात्मनेपदी ।

विद् विचारणे । विन्ते ४ । इत्यादि ।

इति रुधादयः ।

---

## अथ तनादिषूभयपदिनः ।

तनु विस्तारे ।

---

१ भुनक्ति भुञ्जन्ति । भुनजानि । अभुनक्-ग् अभुञ्जन् । बुभोज । भोक्ता । अभौक्षीत् अभौक्ताम्। अभ्यवहारो नाम भोजनम्, अस्मिन्नर्थे भुजधातोरात्मनेपदत्वम् ; पालनार्थे तु परस्मैपदत्वम् । भरतः षट्खण्डवसुन्धरां बुभोज। बालो मोदकं भुङ्क्ते । २ हिंस्तः हिंसन्ति । 'झसाद्धिर्हिः' 'धे सलोपः' हिन्धि । अहिनः । हिंसिष्यति । अहिंसिष्टाम् । आर्हतो न कदाऽपि निरागसं शरीरिणं हिंस्यात् । ३ अनक्ति । आनक्-ग् । आनञ्ज । 'ऊदितो वा' अञ्जिता अङ्क्ता । ४ विविदिरे । वित्सीरन् । वेत्स्यते । अवित्त अवित्सत ।

२७३ तनादेरुप् ; कर्त्तरि चतुर्षु । तनोति तनुते १ ।

२७४ तनादेस्त-थासोर्वा सेर्लुक्। अतत अतनिष्ट। अतथाः अतनिष्ठाः । क्षिणु हिंसायाम् ।

२७५ तनादेरुपधाया गुणो वापि। क्षिणोति क्षेणोति २।

डुकृञ् करणे । करोति ।

२७६ ङित्यदुः । कृञोऽत उत् ङिति। कुरुतः कुर्वन्ति ।

२७७ कृञो नित्यं वमोरुल्लोपः।

२७८ कुरु-छुरोर्न दीर्घः । कुर्वः कुर्मः ।

२७९ कृञो ये । कृञ उपो लोपः स्यात् ये ।कुर्यात् ३।

२८० सं-पर्युपेभ्यः करोतेर्भूषणे सुट्। संस्करोति ।

२८१ अड्-द्वित्वव्यवधानेऽपि कात्पूर्वः सुट् । समस्करोत्। संचस्कार ।

---

१ तन्वन्ति । अतानीत् अतनीत् । तेने । २ क्षिणुतः क्षेणुतः । क्षिणुहि क्षेणुहि । क्षेणिष्यति । अक्षेणीत् । क्षिणुते क्षेणुते । चिक्षिणे। क्षेणिषीष्ट। 'लोपस्त्वनुदात्त-तनाम्' अक्षित अक्षेणिष्ट ।३ करोतु कुरुतात् । 'ओर्वा हेः' कुरु । करवाणि । अकरवम् । चकार चकर्थ चकृव । 'यादादौ ऋतो रिङ् पे' क्रियात्। करिष्यति । अकार्षीत् । कुरुते कुर्वाते । करवामहै । चक्रे । 'उः' कृषीष्ट। अकृत अकृथाः ।

२८२ **सस्रुटः कृञो लिट इट्** । संचस्करिथ । इत्यात्पे ।

**वनु** याचने । वनुते १ । परस्मैपदीत्येके । [ वनोति २ ] ।

**मनु** अवबोधने । मनुते । इत्यात्मनेपदं परस्मैपदं च ।

इति तनादयः ।

---

## अथ तुदादिषूभयपदिनः ।

तुद व्यथने । ०

२८३ **तुदादेरः** । तुदादेरः स्यात् कर्तरि चतुर्षु । तुदति तुदेत् ३ । णुद प्रेरणे । दिश अतिसर्जने ४ । **भ्रस्ज** पाके ५ ।

२८४ **भ्रस्जो रसो रमनपि वा ६** । बभर्ज बभ्रज्ज

---

१ 'शस–दद–वादि०' वत्वे । अवनिष्ट । २ वनुतः । वनवानि । ववनतुः । अवनीत् अवानीत् । ३ तुदतु । 'अतः' तुद । तुतोदिथ । अतौत्सीत् । तुदते तुदन्ते । तुदेत । तुतुदिरे । तुत्सीष्ट । तोत्ता । अतुत्त । ४ अतिसर्जनं दानम् । दिशेत् । दिदेश । देष्टा । 'हशषान्तात्सक्' अदिक्षत । दिक्षीष्ट । अदिक्षत । श्रीवर्द्धमानः प्रभुरपापायामन्तिमं व्याख्यानं दिदेश । ५ 'ग्रहां क्ङिति' 'स्तोश्चुभिश्चुः' 'झबे जबाः' भृज्जति । भृज्जानि । अभृज्जत् । भृज्जते भृज्जेते भृज्जन्ते । भृज्जेत । भृज्जताम् । अभृज्जत । ६ भ्रस्जो रेफस्योपधायाश्च स्थाने रमागमो वा स्यादनपि ।

बभर्जतुः बभ्रज्जतुः। बभर्जिथ बभ्रज्जिथ बभर्ष्ठ बभ्रष्ठ १। **क्षिप** प्रेरणे २। **मिल** संगमे। **मुच्लृ** मोक्षणे।

**२८५ मुचादेर्नुम् अप्रत्यये।** मुञ्चति३। **लुप्लृ** छेदने। लुम्पति। **विदॢल** लाभे। विन्दति ४। **लिप** उपदेहे। लिम्पति ५। **षिच** क्षरणे। सिञ्चति। असिचत्। असिचत असिक्त ६। इत्यात्पे।

---

## अथ तुदादिषु परस्मैपदिनः।

**ऋषि** गतौ ७। **ओव्रश्चू** छेदने। वृश्चति ८। **लिख**

---

१ भृज्ज्यात्। भर्ष्टा भ्रष्टा। अभार्क्षीत् अभ्राक्षीत् अभ्राष्टाम। भर्क्षीष्ट भ्रक्षीष्ट। अभर्ष्ट अभ्रष्ट। २ अक्षैप्सीत् अक्षिप्त। ३ मुमोच। मोक्ष्यति। अमुचत्। मुक्षीष्ट। अमुक्त। ४ अवेदिष्यत्। अविदत्। विन्दते। अवेदिष्ट। अनिडयमिति केचित् वेत्ता। अवैत्सीत्। ५ लेप्ता। 'लिपि—सिचि०' इति ङः अलिपत्। लिप्सीष्ट। आति वा अलिपत अलिप्त। ६ सेक्ता। 'सिस्योः' सिक्षीष्ट। ७ ऋषति। आर्षत्। आनर्ष। आर्षीत्। ८ संप्रसारणं वृश्चतु। वव्रश्च वव्रश्चतुः। वेट्त्वाद् वव्रश्चिथ 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' 'स्कोः संयोगाद्योरन्ते च' वव्रष्ठ। वृश्च्यात्। व्रश्चिता व्रष्टा। व्रश्चिष्यति व्रक्ष्यति। अव्रश्चीत् अव्राक्षीत् अव्राष्टाम् अव्राक्षुः।

अक्षरविन्यासे १। [ कुट कौटिल्ये २ ]। स्फुट विकसने ३। त्रुट छेदने ४। घुट प्रतिघाते। स्फुर स्फुरणे। ध्रु गतिस्थैर्ययोः ५। इति कुटादयः। कृती छेदने। कृन्तति ६। गॄ निगरणे।

२८६ गिरतेः स्वरे रस्य लो वा। 'ॠत इर्' गिलति गिरति ७। स्पृश स्पर्शने ८। प्रच्छ ज्ञीप्सायाम्। पृच्छति ९।

---

१ लिखति। लिलेख। अलेखीत्। २ कुटति। चुकोट। "कुटादेर्ञ्णिद्वर्जः प्रत्ययो ङित्" इति सूत्रं योज्यम्। चुकुटिथ। कुटिष्यति। अकुटीत्। "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इत्यनया परिभाषया कुटादिषु लुङि 'पे सिर्णिद्' इत्यनेन गुणो न भवति। पदं पदं प्रति उक्तः प्रतिपदोक्तः, यथा णप्, अत्र वृद्धिहेतुर्णकार उक्तस्तस्मात् प्रतिपदोक्तः, यत्सामान्येन निर्दिश्य विहितं तल्लक्षणम्, यथा 'पे सिर्णित्' इति सूत्रेण सिप्रत्ययस्य सामान्येन णित्त्वं कृतम्, न चात्र सिप्रत्यये साक्षाद् णित् अस्ति तस्मात् तल्लाक्षणिकम्। ३ पुस्फुटिथ। स्फुटिष्यति। अस्फुटीत्। ४ त्रुट्यति त्रुटति। ५ ध्रुवति। दुध्राव। ध्रुष्यति। अध्रुषीत्। ६ चकर्त। 'नृत-तृद०' कर्तिष्यति कर्त्स्यति। अकर्तीत्। ७ जगार जगाल। गरीता गरिता गलीता गलिता। अगारीत् अगालीत्। ८ पस्पर्श। 'कृषादीनां वा' स्प्रष्टा स्पर्ष्टा। अस्प्राक्षीत् अस्पार्क्षीत् 'कृष-मृश-स्पृश०' 'हशषान्तात्सक्' अस्पृक्षत्। ९ संप्रसारणं पृच्छतु। पप्रच्छ पप्रच्छतुः पप्रच्छिथ पप्रष्ठ। अप्राक्षीत् अप्राष्टाम्।

सृज विसर्गे १ । टुमस्जो शुद्धौ । मज्जति २ । इषु इच्छायाम् । इच्छति ३ । विश प्रवेशने ४ । मृश आमर्शने ५ ।

कॄ विक्षेपे ६ ।

२८७ प्रत्युपाभ्यां किरतेः सुट् । प्रतिस्किरति । उपस्किरति । भुजो कौटिल्ये ७ । इति परस्मैपदिनः ।

## अथ तुदादिष्वात्मनेपदिनः ।

जुषी प्रीतौ ८ । ओविजी भय-चलनयोः ९ । उद्विजते ।

२८८ विजेरिडादिप्रत्ययो ङित् । उद्विजिता १० । ओलस्जी व्रीडे । लज्जते ११ । पृङ् व्यायामे ।

---

१ ससर्ज 'सृजि-दृशोस्थणो वेट्' ससर्जिथ सस्रष्ठ । स्रष्टा अस्राक्षीत् । २ 'स्तोश्चुभिश्चुः' 'झबे जबाः' ममज्जिथ 'मस्जि-नशोर्झसे नुम्' 'स्कोराद्योश्च' 'चो कुः' ममङ्क्थ। मङ्क्ता। अमङ्क्ष्यत् । अमाङ्क्षीत्। ३ 'गमां छः' इच्छतु। इयेष। एषिता एष्टा । ऐषिषुः । ४ वेक्ष्यति । अविक्षत् । ५ अमृशत् । म्रष्टा मर्ष्टा । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । ६ 'ऋत्-संयोगाद्गुणादिरकित्' चकरतुः चकरिथ । 'ऋत इर्' 'र्वोर्वि हले' कीर्यात् । 'वृङ्-वृञ्-ॠदन्तानां वा' करीता करिता । अकारीत् अकारिषाम् । ७ भुजति । अनपि पालनार्थ भुज-तद्रूपाणि । ८ जुजुषे । अजोषिष्ट । ९ प्रायेणोत्पूर्वकोऽयं व्यवह्रियते । १० उद्विजिषीष्ट। उद्विजिष्यते । उदविजिष्ट ।११ ललज्जे । अलज्जिष्ट।

२८९ अयङि। ऋतो रिङ् स्याद् अप्रत्यये यकि च। व्याम्रियते । व्यापृत १ । मृङ् प्राणपरित्यागे।

२९० म्रियतेर्लुङ्-लिङोश्चतुर्ष्वेवात्। म्रियते। ममार। ममर्थ । अमृत २ । दृङ् आदरे । आद्रियते ३। धृङ् अवस्थाने। ध्रियते । अधृत ४ । इत्यात्मनेपदिनः।

इति तुदादयः।

---

## अथ क्र्यादिषूभयपदिनः।

डुक्रीञ् द्रव्यविनिमये ।

२९१ ना क्र्यादेः। कर्तरि चतुर्षु। क्रीणाति।

२९२ ई हसे। ना इत्यस्यात ईः स्यात् ङिति हसे। क्रीणीतः।

२९३ नातः। ना इत्यस्यातो लोपो ङिति स्वरे। क्रीणन्ति। क्रीणीते ५ । प्रीञ् तर्पणे कान्तौ च। प्रीणाति ६ ! पूञ् पवने।

---

१ व्यापप्रे। व्यापृषीष्ट । व्यापरिष्यते । २ मृषीष्ट। मर्तासि। अमरिष्यत् । ३ आदद्रे। आदृत । ४ धृषीष्ट। ५ क्रीणीयात्। क्रीणीहि क्रीणानि । अक्रीणन्। चिक्राय चिक्रियतुः चिक्रयिथ चिक्रेथ । क्रीयात्। क्रेता । अक्रैषीत् अक्रैष्टाम्। क्रीणाते क्रीणते! क्रीणीत । क्रीणै। अक्रीणीत। चिक्रिये चिक्रियिषे। क्रेषीष्ट। अक्रेष्ट। ६ क्रीञ्वद्रूपाणि।

२९४ **प्वादेर्ह्रस्वः** । कर्तरि चतुर्षु । पुनाति १ । लूञ् छेदने । लुनाति २ । धूञ् कम्पने । धुनाति ३ । **ग्रह** उपादाने । गृह्णाति ।

२९५ **हसादान हौ** । हसान्ताद्धातोर्नास्थाने आनः स्याद् हौ परे । गृहाण ४ । **इत्युभयपदिनः** ।

**ज्ञा** अवबोधने । जानाति ५ । **बन्ध** बन्धने । बध्नाति ६ ।

---

१ पुनीयात् । पुनीहि पुनानि । अपुनाम् । पुपाव पुपविथ । पविष्यति । अपावीत् । पुनीते । पुनावहै । पुपुवे । अपविष्ट । २ अलावीत् । लविषीष्ट । अलविषाताम् । ३ वेट्त्वाद् दुधविथ दुधोथ दुधुविव । अधविष्यत् अधोष्यत् । 'स्तु-सु-धूञ्भ्यां पे सेरिट्' अधावीत् । धुनीते धुनते । दुधुविषे । धविषीष्ट धोषीष्ट । अधविष्ट अधोष्ट । ४ संप्रसारणं गृह्णीतः गृह्णन्ति । गृह्णीयात् । गृह्णीताम् । जग्राह जगृहतुः जगृहिव । गृह्यात् । 'इटो ग्रहाम्' ग्रहीता । अग्रहीत् । जगृहाते जगृहिरे । ग्रहीषीष्ट । अग्रहीष्ट । श्रीहेमचन्द्रो देवचन्द्रसूरिभ्यो दीक्षां जग्राह । ५ 'ज्ञा-जनोर्जा' जानीहि । जज्ञौ । ज्ञेयात् ज्ञायात् । अज्ञासीत् । श्रीवादिदेवसूरिः सकलं न्यायशास्त्रं जज्ञौ । ६ बधान । बबन्ध बबन्धिथ बबन्द्ध बबन्ध । भन्त्स्यति । अभान्त्सीत् अबान्द्धाम "हसात्परस्य झसस्य०" अबान्धाम् अभान्त्सुः ।

ग्रन्थ ग्रन्थने । ग्रथ्नाति १ । अश भोजने २ । पुषू पुष्टौ ३ । मुष् स्तेये ४ । क्लिशू बाधने ५ । इति परस्मैपदिनः ।

वृङ् संभक्तौ । वृणीते ६ । इति आत्मनेपदम् ।

इति क्र्यादयः ।

---

## अथ चुरादिषूभयपदिनः ।

चुर स्तेये ।

२९६ चुरादेः स्वार्थे ञिः । चोरयति चोरयते । चोरयाञ्चकार चोरयाञ्चक्रतुः । 'ञेः' । चोर्यात् । 'ञेरङ्

---

१ 'श्रन्थि–ग्रन्थि-दम्भिभ्यो लिटः कित्त्वं वा' जग्रन्थ जग्रन्थतुः जग्रथतुः जग्रन्थिथ । अग्रन्थीत् श्रीरामचन्द्रसूरिर्नलविलासनाटकम् । २ अश्नीतः । अश्नीयात् । अशान । आश । आशीत् । उत्तमः सात्त्विकं भोजनमश्नीयात् । ३ पुषाण । अपोषीत् । नायं पौषादिकः । ४ अमोषीत् । ५ क्लिशान । चिक्लेश । क्लेशिष्यति क्लेक्ष्यति । अक्लेशीत् अक्लिक्षत् । ६ वृणते । वृणीत । वृणताम् वृणीष्व वृणावहै । वव्रे 'ऋादेर्णादेः' ववृषे ववृढ्वे । 'वृङ्-वृञ्-ॠदन्तात् सिस्योरिड् वाऽऽति' वरिषीष्ट वृषीष्ट । 'वृङ्-वृञ्-ॠदन्तानां वा' वरिता वरीता । अवरिष्ट अवरीष्ट अवृत ।

द्विश्च ' ' अङि लघौ ह्रस्व उपधायाः ' ' लघोर्दीर्घः ' अचू-
चुरत् १ । चिति स्मृत्याम् २ ।.श्रण दाने । विश्राणयति ३ ।
तड आघाते ४ । ( ज्ञप ज्ञापने मित् ) ।

२९७ मितां ह्रस्वः णौ । उपधायाः । ज्ञपयति ५ ।
कृत संशब्दे ।

२९८ ऋत इर् । धातोरुपधाया ऋत इर् । कीर्तयति ६ ।
ज्ञा नियोगे ।

२९९ रातो णौ पुक् । ऋधातोरादन्तस्य च पुक् स्याद्

---

१ चोरयेत । चोरयाञ्चकार चोरयाञ्चक्रे चोरयामास चोरयाम्बभूव । चोरयिता । अचोरयिष्यत्-त । अचूचुरन् अचूचुरः अचूचुरम् । अचूचुरत अचूचुरन्त । २ ' इदितो नुम् ' चिन्तयति । अचिन्तयत् । चिन्तयाञ्चकर्थ । चिन्त्यात् । चिन्तयिष्यति । अचिचिन्तत् । चिन्तयते । चिन्तयिषीष्ट । अचिचिन्तत । ३ श्राणयाञ्चकार । " कण-रण-भण-श्रण-लुप-हेठि-हेनू-वाणि-लोटि-लोठि-लोपीनां वा ह्रस्वोऽङि " अनेन सूत्रेण अशिश्रणत् अशश्राणत् । ४ ताडयति । अतीतडत् । ५ ज्ञपयाञ्चकार । ज्ञप्यात् । अजिज्ञपत् । ६ कीर्तय । कीर्तयाञ्चकृव । "उपधाया ऋवर्णस्य ऋद् वाऽङ्परे णौ " इर्-अर्-आरामपवादः । अचीकृतत् अचिकीर्तत् श्रीजिनेन्द्रं सम्प्रतिभूपतिः ।

णौ । ज्ञापयति १ । **भू** चिन्तन-मिश्रीकरणयोः । भावयति २ ।

**लोकृ लोचृ** दर्शने ३ ।

**३०० न रितः ।** ऋदितः शासश्चाङ्युपधाया ह्रस्वो न । अलुलोकत् । अलुलोचत् ।

**३०१ नवगण्यामुक्तेभ्यो हिंसाऽर्थेभ्यः स्वार्थे ञिः ।** हिंसयति ।

**कथ** वाक्यप्रबन्धने । अल्लोपस्य स्थानिवत्त्वाद् वृद्धिर्न कथयति ।

**३०२ अग्लोपिनो नाङ्कार्यम् ।** अचकथत् ।

**गण** संख्याने ।

**३०३ गणेः पूर्वस्य ईद्वाऽङ्परे णौ ।** अजीगणत् अजगणत् । **स्तन** देवशब्दे ४ । **रच** प्रयत्ने ५ । **कल** गतौ सख्याने च ६ ।

---

१ ज्ञापयाञ्चकार । ज्ञाप्यात् । अजिज्ञपत् । "पुकि गुणः" अनेन सूत्रेण पुकि ऋधातोर्गुणः । अर्पयति आर्पिपत् । २ भाव्यात् । अबीभवत् । भावयिष्यते । अबीभवन्त । ३ अव वि-आङुपसर्गेभ्यः पर एव चौरादिको लोकृधातुर्दर्शनार्थकः । श्रीपालो जिनबिम्बमालोकयति । अवलोकयति । विलोकयति । आलोचयति । ४ स्तनयति । अतस्तनत् । ५ रचयामास । अररचत् । श्रीहेमचन्द्रसूरिः पञ्चानुशासनानि रचयामास । ६ कलयाञ्चक्रे । अचकलत । संख्यानं विशिष्टं ज्ञानम् ।

स्पृह ईप्सायाम् १ । सूच पैशुन्ये २ । इति कथादयोऽदन्ताः ।

इति चुरादयः । इति दशगणी समाप्ता ॥

## अथ ण्यन्तप्रक्रिया ।

**३०४ धातोः प्रेरणे ।** प्रेरणेऽर्थे धातोर्णिः प्रत्ययः स्यात् ३ । भवन्तं प्रेरयति भावयति । भावयते ।

**३०५ अङ्-सयोः ।** पवर्ग-य-ल-जेष्ववर्णपरेषु पूर्वस्योकारस्येत्वमङ् सयोः । अबीभवत् ४ ।

**३०६ शृणोत्यादीनां पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे ५।** अशिश्रवत् । अशुश्रवत् ।

**३०७ हनो घत् ।** इणवर्जिते ञ्णिति । घातयति ६ ।

**३०८ तिष्ठतेरुपधाया इः स्यादङि ।** अतिष्ठिपत् ७ ।

---

१ स्पृहयति । अपस्पृहत् । २ सूचयाञ्चक्रे । असुसूचत । ३ ण्यन्ताः सर्वे धातव उभयपदिनो भवन्ति । ४ उवर्णान्तधातूनां पूर्वं द्वित्वं, पश्चाच्च वृद्धिः, तदनन्तरमुकारस्येत्वं कर्तव्यम्, ततश्च 'अङि लघौ ह्रस्व उपधायाः' आदीनि सूत्राणि पूर्ववत् कर्तव्यानि। न्यबीभवत्। ५ आदिशब्दात् स्रवति-द्रवति-प्रवति-प्लवति-च्यवतीनां ग्रहणम् । ६ घातयामास। अजीघतत् अजीघतन् । ७ स्थापयति।

३०९ **पादेर्युक् णौ** १। पाययति।

३१० **पिबतेरुपधाया लोपश्चाङि** २। अपीप्यत्।

३११ **रुहेर्णौ पो वा।** रोपयति रोहयति ३।

३१२ **इङ्-क्री-जीनामात्वं णौ।** अध्यापयति। 'स्वरादेः परः' अध्यापिपत्।

३१३ **अङ्-सपरे णौ इङो गाङ् वा।** अध्यजीगपत्। क्रापयति ४। जापयति। अजीजपत् ५।

३१४ **दुषेर्णौ दीर्घः।** दूषयति ६।

३१५ **स्वापेः संप्रसारणमङि।** असूषुपत् ७।

३१६ **घटादयो मितः** ८। घटयति ९।

---

१ पा-शो-छो-सो- ह्वञ्-व्येञः पादयः। २ चकारात् पूर्वस्येकारः। ३ अरूरुपत् अरूरुहत्। ४ क्रापयन्ति। अचिक्रपताम्। क्रापयाञ्चक्रे। अचिक्रपन्त। ५ जापयतु। जापयाम्बभूव। अजीजपत्। ६ दूषयाञ्चकार-चक्रे अदूदुषत्-त। ७ स्वापयति। त्रिशलादेवी वर्द्धमानकुमारं असूषुपत्-त। ८ घट-क्षण-व्यथ-प्रथ-म्रद-स्खद-कद-क्रद-क्लद-क्रप-त्वर-प्रस दक्ष-श्रा-स्मृ-दॄ-नॄ-ष्टक-स्तक-चक-अक-कख-अग-रग-लग-ह्रग-ह्लग-षग-सग-ष्टग-स्थग-वट-भट-णट-गड-हेड-लड-फण-कण-रण-चण-शण-श्रण--स्नथ-क्नथ क्रथ-क्लथ--छद-मद-ष्टन-स्तन-ध्वन-स्वन-चन-ज्वर-चल-ह्वल-ह्मल-ज्वला एते घटादयो धातवो भौवादिका एव। ९ 'मितां ह्रस्वो णौ' घटयतु। 'णेः' घट्यात् अजीघटत्-त।

३१७ **अमन्ताश्च** १ । शमयति २ ।

३१८ **न कम्यमिचमः** ३ । कामयति ४ ।

३१९ **क्वचिदुपसर्गे न** । निशामयति । आयामयति ५ । ईर्ष्य ईर्ष्यायाम् । ईर्ष्ययति । ऐर्ष्ययत् ।

३२० **ईर्ष्यतेस्तृतीयो हस एकस्वरो वा द्विः** ६ । ऐर्ष्यियत् ऐर्षिष्यत् ।

---

१ चकारादमन्ता अपि धातवो मित इत्यर्थः। मारणाद्यर्थकज्ञा-कम्पनार्थकचलि-हर्षाद्यर्थकमदी-व्यक्तशब्दार्थकध्वन-जनी-जृष-क्नसु-रञ्जप्रभृतयोऽपि मितः सन्ति। अनुपसर्गा ज्वल-ह्वल-ह्मल-नमा ग्ला-स्ना-वनु-वमाश्च विकल्पेन मित्त्वं यान्ति। तेन ज्वलयति ज्वालयतीति रूपाणि स्युः। २ अशीशमत्-त। ३ मित इत्यस्य मण्डूकप्लुतिन्यायेनानुवृत्तिरेवमग्रेऽपि यथाप्रयोजनं बोध्या। ४ कामयानि। अचीकमत्-त। आमयति। लघुधात्वक्षरस्य परत्वाभावात् पूर्वस्य न दीर्घः, आमिमत्-त। अचीचिमत्-त। ५ न्यशीशमत्-त। आयामयाञ्चक्रे। आयीयमत्-त। एवमवस्खादयति परिस्खादयतीत्यनयोरपि न मित्त्वम्, तेन ह्रस्वोऽपि न स्यात्। ६ हसापेक्षया तृतीयहसस्य स्वरसहितस्य, तृतीयस्वरस्य हससहितस्य वा द्वित्वं भवति। प्रथमपक्षे यकारस्य द्वित्वे ऐर्ष्यियत्, द्वितीयपक्षेऽत्र तृतीयस्वरस्याभावात् 'स्वरादेः परः' रेफस्य निषेधात् षकारस्य द्वित्वे ऐर्षिष्यत्। तृतीयैकस्वरपक्षः सान्ते प्रवर्तते, तेन सान्तेऽपि ईर्ष्यिषिषति ईर्ष्यियिषति इति रूपद्वयम्।

३२१ ण्यन्तात् स्वार्थिकात् णिः । चोरयति १ ।

इति ण्यन्तप्रक्रिया ।

---

## अथ सान्तप्रक्रिया ।

३२२ इच्छायामात्मनः सः । धातोरात्मन इच्छायामर्थे सः प्रत्ययः ।

३२३ द्विश्च । सप्रत्ययान्तस्य धातोर्द्वित्वं भवति ।

३२४ वुः से । उवर्णान्ताद्दवर्णान्ताद् ग्रहश्च परस्य सस्य नेट् २।

३२५ नानिटि से । अनिटि से धातोर्गुणो न भवति । भवितुमिच्छति बुभूषति । अबुभूषीत् ३ ।

३२६ वृङ्-वृञ्-ॠदन्तात् सस्येड् वा । तितरीषति तितरिषति तितीर्षति ४ ।

---

१ अचूचुरत्-त । २ गुहू धातुरपि गृहीतव्यो जुघुक्षतीति नित्यप्रयोगोपलब्धेः । ३ 'ह्रस्वः' 'अप् कर्तरि' प्रभृतीनि सूत्राणि योज्यानि । अबुभूषत् । 'कासादिप्रत्ययादाम्०' बुभूषाञ्चकार । 'यतः' बुभूष्यात् । 'सि-स-ता-सी-स्यपामिट्' बुभूषिता । 'सेः' 'इट ईटि' अबुभूषीः । ४ विवरीषते विवरिषते "से दीर्घः" 'पोरुर्' वुवूर्षते । वृञ्धातोरुभयपदित्वाद् विवरिषति विवरिषते इत्यादीनि रूपाणि भवन्ति।

३२७ **क्वचिन्नित्यम्** । जिगरिषति जिगलिषति १ ।

३२८ **रुद-विद-मुष-ग्रहि-स्वपि-प्रच्छिभ्यः सः कित्** २। रुरुदिषति । विविदिषति । मुमुषिषति । जिघृक्षति । सुषुप्सति ।

३२९ **हनिङोः से दीर्घः** । जिघांसति ३ ।

३३० **इङः ४ से गम्** ।

३३१ **सान्तात्पूर्ववदात** ५ । अधिजिगांसते ।

३३२ **गमेः सस्येड्, नाति** ६ । जिगमिषति ।

३३३ **इस्से** ७ । अपिद्दा-धा-रभ-लभ-शक-पत-पद-मि-मी-मा-मेङां स्वरस्येस् अनिटि से, पूर्वस्य च लोपः ८ । दित्सति । धित्सति । रिप्सते । लिप्सते । शिक्षति । मित्सति । मित्सते ।

---

१ गॄ निगरणे। एवं कॄ-हृ-धृ-प्रच्छिभ्योऽपि सस्य नित्यमिडिति चन्द्रिकाकारः । २ कित्त्वाद् रुद-विद-मुषां गुणो न भवेत्, तथा ग्रहादीनां संप्रसारणं स्यात् । प्रच्छे. सस्येडिति ख-पुस्तके पाठः । पिपृच्छिषति श्रेणिको महावीरम् । ३ ' पूर्वाद्धन्तेर्हस्य घः ' । ४ इङ् इति क-पुस्तके पाठः । ५ ये धातवः पुरा यस्मिन् पदे निर्दिष्टास्ते सप्रत्यये तस्मिन्नेव पदे भवेयुः । ६ आति तु न इति ग—पुस्तके पाठः । ७ अपिद्दाधादीनां स्वरस्येस् अनिटि से परे पूर्वस्य लोप इति क—पुस्तके पाठः । ८ रभ रामस्ये; डुलभष् प्राप्तौ; शक्लृ शक्तौ, शक मर्षणे; पत्लृ पतने; पद गतौ पित्सते; डुमिञ् प्रक्षेपणे, मिङ् प्राणवियोगे; मीञ् हिंसायाम्; मा माने, माङ् माने; मेङ् प्रणिदाने ।

**३३४ पत-तन-दरिद्राभ्यः सस्येड् वा** । पिपतिषति । पित्सति ।

**३३५ आप्नोतेरीः** । आप्नोतेरात ईः स्यात्से, पूर्वस्य लोपः । ईप्सति १ ।

**३३६ तनेरनिटि से वा दीर्घः** । तितनिषति तितांसति तितंसति २ ।

**३३७ दम्भि-ज्ञपिभ्यां सस्य वेट्** । दिदम्भिषति ।

**३३८ ज्ञपेः स्वरस्यानिटि से ईत्, पूर्वलोपश्च** । जिज्ञपयिषति ज्ञीप्सति ।

**३३९ दम्भेरिदीच्च** । धिप्सति धीप्सति ।

**३४० इवन्तानां श्रिआदीनां च सस्येड् वा ३** । दिदेविषति ।

---

१ इदं सूत्रं ख—पुस्तके नास्ति । ईप्साञ्चकार । ऐप्सीत् ।
२ अत्र दिदरिद्रिषति दिदरिद्रासति इति रूपद्वयं क—पुस्तकेऽस्ति ।
३ आदिग्रहणाद् ऋध-भ्रस्ज-स्वृ-यु-ऊर्णु-भृ-सनीनां ग्रहणम् । "ऋधेरनिटि से स्वरस्य इर्द्वित्वलोपश्च" 'य्वोर्वि हसे' ईर्त्सति । बिभ्रज्जिषति बिभर्जिषति बिभ्रक्षति बिभर्क्षति । सिस्वरिषति अनिट्पक्षे 'नानिटि से' "से दीर्घः" 'पोरुर्' सुस्वूर्षति । यियविषति युयूषति । ऊर्णुनुविषति ऊर्णुनविषति ऊर्णुनूषति । सिसनिषति, अनिट्पक्षे 'जन-सन-खनामात्वं०' सिषासति ।

३४१ वस्यानिटि से उः। १ दुद्यूषति। शिश्रयिषति शिश्रीषति। बिभरिषति बुभूर्षति।

३४२ इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्च क्त्वा-सौ सेटौ वा कितौ। दिद्युतिषते दिद्योतिषते। लिलिखिषति। लिलेखिषति।

३४३ स्तौति-ण्यन्तयोरेव षे पूर्वात्सस्य षः। तुष्टूषति। सुष्वापयिषति।

३४४ सान्तात्सो न। चिकीर्षितुमिच्छति।

३४५ स्वार्थसान्तात्तु स्यादेव। जुगुप्सिषते २।

३४६ स्मिङ्-पूङ्-ऋ-अञ्जू-अशूभ्यः सस्येट् ३। सिस्मयिषते।

इति सान्तप्रक्रिया।

---

१ "से दीर्घः" से परे सति पूर्वस्य दीर्घः स्यादिति ख—पुस्तके विशेषः। अनेनैव दुद्यूषत्यादीनां दीर्घत्वं सिध्येत्। २ चिकित्सिषति। ३ अनेन सूत्रेणानिटां वेटाञ्चैषां धातूनां नित्यमिड्विधानम्। पूङ् पवने भौवादिकः, पिपविषते। अरिरिषति। अञ्जिजिषति। अञ्जिजिषाञ्चकार। अशिशिषते। प्रेरणार्थात् स्वार्थिकाद्वा ण्यन्तादपि सप्रत्ययो भवति, तेन बिभावयिषत्यादीनि रूपाणि स्युः।

## अथ यङन्तप्रक्रिया।

३४७ **अतिशये हसादेर्यङ् द्विश्च** १। हसादेरेकस्वराद्धातोर्भृशार्थे २ पौनःपुन्ये च यङ् प्रत्ययः स्याद्, द्वित्वं च ३।

३४८ **यङि**। यङि यङ्लुकि च पूर्वस्य नामिनो गुणः। 'स धातुः' इत्यनेन धातुसंज्ञा। भृशं पुनः पुनर्वा भवति बोभूयते ४। बोमुज्यते।

३४९ **अनपि च हसाद् यस्य लोपः** ५। बोभुजाञ्चक्रे।

३५० **आतः**। यङि यङ्लुकि च पूर्वस्यात आकारः। पापच्यते ६।

३५१ **गत्यर्थात्कौटिल्ये एव यङ्**। वाव्रज्यते।

३५२ **सूचि-सूत्रि-मूत्रि-अटि-अर्ति-अशू-ऊर्णोतिभ्यो**

---

१ यङो ङित्त्वादस्यां प्रक्रियायां सर्वे धातव आत्मनेपदिन एव स्युः। २ अतिशयेऽर्थे, इति क-ख-पुस्तकयोः पाठः। ३ यङि सति। धातोर्द्विवचनं चेति पुस्तकद्वये पाठः। ४ बोभूयेत बोभूयताम्। अबोभूयत। बोभूयाञ्चक्रे बोभूयामास बोभूयाम्बभूव। बोभूयिषीष्ट। बोभूयिष्यते। अबोभूयिष्ट अबोभूयिषत। ५ हसाद्यस्य लोपः स्यादनपि, इति पुस्तकद्वये। अल्लोपस्य स्थानिवद्भावान्न गुणः। 'यतः' बोमुजिता। अबोमुजिष्ट। ६ पापचाम्बभूव।

यङ् वाच्यः १ । अटाट्यते ।

**३५३ क्वचित्स्वरादेरपि रस्य न द्वित्वनिषेधो यकारे ।** अरार्यते २ ।

**३५४ लुपादीनां गर्हायामेव यङ् ३ ।** लोलुप्यते ।

**३५५ ञम-जपां नुक् ।** ञमान्तानां जपादीनां ४ च पूर्वस्य नुक् ५ यङ्-यङ्लुकोः । यंयम्यते । तंतन्यते । जंजप्यते । दंदश्यते । बंभज्यते ।

---

१ सूच्यादीनां बहुस्वरत्वादट्यादीनां स्वरादित्वादनेन सूत्रेण यङ्विधानम् । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । **अट** गतौ । कुटिलमटतीति अटाट्यते । अशूङ् व्याप्तौ । अशाश्यते । ऊर्णुञ् आच्छादने । 'यङि' 'ये' ऊर्णोनूयते । २ ऋ गतौ । कुटिलमृच्छतीति पूर्वं गुणं कृत्वा अर्य इति करणीयम्, ततः सस्वरस्य र्यस्य द्विर्भावः, ततश्च 'आतः' इति सूत्रेण पूर्वरकारस्याकारस्य दीर्घः अरार्यते । अराराञ्चक्रे । अरारिष्ट । ३ लुप-सद-चर-जप-जभ-दह-दंश-गॄ इत्येते लुपादयः । गर्हितं लुम्पतीति । **षद्लृ** विशरणादौ सासद्यते । " गिरते रेफस्य लत्वं यङि " जेगिल्यते । ४ जप-जभ-दह-दंश-भञ्ज-पस-चर-फला जपादयः । ५ नुगनुस्वारत्वेन बोद्धव्यः, स च पदान्तवज्ज्ञेयः, तेन ' वा पदान्तस्य ' इति सूत्रेण परसवर्णो विकल्पेन भवति । यँय्यम्यते । तन्तन्यते । जञ्जप्यते । दन्दश्यते । बम्भज्यते । जंजन्यते जञ्जन्यते 'जन-सन-खनामात्वं०' जाजायते । "चर-फलयोः पूर्वात्परस्याकारस्य यङ्यङ्लुकोरुकारः स्यात्" 'ह्वोर्वि हसे' चंचूर्यते चञ्चूर्यते । पंफुल्यते पम्फुल्यते । **पस** सौत्रो धातुर्गत्यादौ पंपस्यते पम्पस्यते ।

३५६ श्वशेर्यङि न संप्रसारणम् १ । वावश्यते ।

३५७ रीगृदुपधस्य । ऋत्वतो धातोर्यङि पूर्वस्य रीक् । नरीनृत्यते । वरीवृत्यते । परीपृच्छ्यते ।

३५८ वञ्च्वादीनां यङि यङ्लुकि च पूर्वस्य नीक् २ । वनीवच्यते । पनीपद्यते ।

३५९ दादेरिः। अपिद्दा-धा-मा-गै-हाक्-पिबति-सो-स्थामि-कारोऽनपि क्ङिति हसे । देदीयते ३ ।

३६० घ्रा-ध्मोरीर्यङि । जेघ्रीयते । देध्मीयते ।

३६१ हन्तेर्हिंसायां घ्नीभावः । जेघ्नीयते जङ्घन्यते ।

३६२ स्वपेर्यङि संप्रसारणम् । सोषुप्यते ४ ।

३६३ शीङोऽयङ् ये क्ङिति । शाशय्यते ।

इति यङन्तप्रक्रिया ।

---

१ 'ग्रहां क्ङिति च' इत्यस्य बाधकमिदं सूत्रम् । २ वञ्चु-स्रंसु-ध्वंसु-भ्रंसु-कस-पत-पद-स्कन्दाम् । वञ्चु वञ्चने । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । कस गतौ, चनीकस्यते । पनीपत्यते 'नो लोपः' चनीस्कद्यते । ३ 'यङि' 'ये' देधीयते । मेमीयते । जेगीयते । जेहीयते । पेपीयते । षो अन्तकर्मणि, सेषीयते । तेष्ठीयते । ४ सोषुपाञ्चक्रे । सोषुपिता । असोषुपिष्ट ।

# अथ यङ्लुगन्तप्रक्रिया।

**३६४ वान्यत्र।** ऊकप्रत्ययसंयोगं १ विना यङो वा लुक्। यङ्लुगन्तात्पम्। अदादिवत्। अदादित्वादपो लुक् यङ्लुकि सति।

**३६५ पिति तिस्म वेट् २।** बोभवीति बोभोति। बोभवाञ्चकार। अबोभूवीत् ३।

---

१ 'यङ ऊकः' इति कृदन्तसूत्रेणोके आगते सति धातोर्यङो नित्यं लुक् स्याद्, यथा दन्दशूकः जञ्जपूकः। ऊकवर्जिते स्थाने तु यङो वा लुगिति भावः। बहुलं लुगित्यन्ये तेन यङः क्वचिल्लुक् क्वचिदलुक्। लुगभावपक्षे धातुर्यङन्तो भवति, यथा बोभूयते बोभुज्यते। २ यङ्लुकि हसादीनां पितां तकार-सकार-मकाराणामीड् वा स्यात्। ३ अन्तरङ्गत्वादादौ यङो लुग् भवति, ततः प्रत्ययलोपे प्रत्ययलक्षणमिति न्यायेन द्वित्वादि। 'यङि' 'स धातुः' इत्यनेन धातुत्वात् तिबादयः 'परतोऽन्यद्' इति परस्मैपदम् 'गुणः' बोभवीषि बोभोषि बोभूतः 'द्वेः' 'नुधातोः' बोभुवति। बोभूयात्। अबोभवीत् अबोभोत् 'अन उस्' अबोभवुः। बोभूयात्। 'सि-स-ता-सी-स्यपा-मिट्' बोभविता। बोभविष्यति। अबोभविष्यत्। अबोभोत् अबोभुवुः। 'भुवः सिलोपेऽयङ्लुकि गुणो न' इति गुणप्राप्तिः 'पिति तिस्म वेट्' 'भुवः सिलोपे स्वरे वुक्' इत्यनेन सूत्रेण गुणं बाधित्वा नित्यत्वाद् वुक्, अबोभूवीः अबोभोः।

पापच्चीति पापक्ति १ ।

**३६६ ऋदन्तानां ऋदुपधानां च यङ्लुकि पूर्वस्य रुक्-रिकू-रीकः ।** चर्करीति चरिकरीति चरीकरीति । चर्कर्ति चरिकर्ति चरीकर्ति २ । वर्वृतीति वरिवृतीति वरीवृतीति । वर्वर्त्ति वरिवर्ति वरीवर्ति ३ । अररीति अरियरीति अरियरीति । अरर्ति अरियर्ति

---

शितपा शपाऽनुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १ ॥

तिप्प्रत्ययेन, अप्प्रत्ययेन, अनुबन्धेन च कथितं यत् कार्यम्; यत्र च गणेन, एकस्वरेण च निर्देशं कृत्वोक्तम्; तत् पञ्चप्रकारं कार्यं यङ्लुकि न स्यात् । तिप्प्रत्ययेन यथा 'अर्त्यर्ति-व्ययतीनां थपो नित्यमिट्' । अप्प्रत्ययेन यथा 'अपि रञ्ज-दंश-सञ्ज-स्वञ्जाम्' । अनुबन्धेन यथा 'आदनुदात्त-ङितः' इत्यनेन शीङादीनामात्मनेपदम् । गणेन यथा 'दिवादेर्यः' 'लित्पुषादेर्ङः' । एकस्वरग्रहणेन यथा 'नैकस्वरादनुदात्तात्' । १ 'आतः' अपापचीत् अपापक्-ग् । पापचाञ्चकार । 'हसादेर्लघो०' अपापाचीत् अपापचीत् । २ चर्कृतः चरिकृतः चरीकृतः 'द्वेः' चर्क्रति चरिक्रति चरीक्रति । चर्कराञ्चकार चर्करामम्बभूवेत्यादि । ३ वृतु वर्तने । "हसादुत्तरस्य झसस्य०" वर्वर्ति वर्वर्त्ति । 'द्वेः स्वरेऽपि नोपधाया गुणः' वर्वृतीषि ।

अरियर्ति । अर्ऋतः अरियृतः अरियृतः । आरति अरियूति अरियूति १ । पाप्रच्छीति पाप्रष्टि २ ।

इति यङ्लुगन्तप्रक्रिया ।

---

## अथ कण्ड्वादयः ३ ।

३६७ कण्ड्वादिभ्यो धातुभ्यः स्वार्थे यक् । कण्डूञ् गात्रविघर्षणे । कण्डूयति कण्डूयते ४ । मन्तु अपराधे रोषे च ।

---

१ ऋ गतौ । पूर्वं द्वित्वं ततः 'रः' इत्यनेन पूर्वस्याकारः ततो रुगादयः, गुणस्तिबादयश्च ततः 'पिति त्स्मि वेट्' अररीषि । रिक्-रीकोः 'असवर्णे स्वरे पूर्वस्येवर्णोवर्णयोरियुवौ' इतीय् अरियरीषि अरियरीषि । अर्ऋयात् । अररीतु अरर्तु । आररीत् ईडभावे 'दिस्योर्हसात्' 'स्रोर्विसर्गः' आरः आररम् । अरराञ्चकार अरराम्बभूव अररामास । आरियात् । अररिता । आरारीत् आरारिष्टाम् । २ 'ग्रहां क्ङिति च' इति सूत्रे पृच्छतीति तिबा निर्देशात् तत्सादौ न सम्प्रसारणम् । 'क्ङिति झसे, क्वौ जमे च छस्य शो वस्य ऊः' 'छशषराजादेः षः' पाप्रष्टः 'द्रेः' पाप्रच्छति पाप्रश्मि पाप्रच्छ्वः पाप्रश्मः । पाप्रड्ढि । अपाप्रट्-ड् । ३ आकृतिगणोऽयम् । कण्ड्वादिः कैश्चिदेकादशगणत्वेन मन्यतेऽपरैस्तन्नामप्रक्रियात्वेन । ४ ञित्त्वादुभयपदम् । कण्डूयाञ्चकार-चक्रे ।

मन्तूयति । **वल्गु** पूजा-माधुर्ययोः । वल्गूयति । **अस्** असु **असूञ्** उपतापे । अस्यति १ । असूयति । असूयति असूयते २ । **लेला** दीप्तौ । लेलायति । **मेधा** आशुग्रहणे । मेधायति ३ । **सुख दुःख** तत्क्रियायाम् ४ । सुख्यति । दुःख्यति । **भिषज्** चिकित्सायाम् । भिषज्यति । **इषुध्** शरधारणे । इषुध्यति । **गद्गद्** वाक्स्खलने । गद्गद्यति । **एला खेला** विलासे । एलायति । खेलायति । **महीङ्** पूजायाम् । महीयते ५ । **अगद्** नीरोगत्वे । अगद्यति । आगदीत् ।

इति कण्ड्वादयः ।

---

## अथ नामधातुप्रक्रिया ।

**३६८ नाम्नो य ई चास्य** । नाम्न आत्मन इच्छायामर्थे यः ६ स्यादवर्णस्य चेकारः । आत्मनः पुत्रमिच्छति पुत्रीयति ।

---

१ 'अतोऽपि च हसाद् यस्य लोपः' असाञ्चकार । आसिष्यत् । २ असूयाञ्चकार-चक्रे । ३ अभयकुमारो राज्यनीतिं मेधाञ्चकार । ४ **सुख दुःख** सुख-दुःखयोरिति ख–पुस्तके पाठः । ५ महीयामास महीयाम्बभूव । महीयिषीष्ट । कुमारपालभूपालो वीतरागवर्द्धमान-देवमूर्त्तिममहीयिष्ट । ६ यप्रत्ययान्तस्य नामधातोः परस्मैपदित्वं ञिद्-ङिद्भिन्नत्वात् ।

**३६९ क्वचिद्यः स्वरवत्।** गव्यति। नाव्यति १।

**३७० हसाद्यस्य लोपो वाऽनपि नामधातौ।** त्वद्यति २। त्वदाञ्चकार। मद्यति। मदाञ्चकार। युष्मद्यति ३। अस्मद्यति। वाच्यति। समिध्यति। समिधिता।

**३७१ काम्यश्च** ४। पुत्रकाम्यति ५।

**३७२ हसात्तद्धितयस्य लोपो ये च्वौ च।** गार्गीयति ६।

**३७३ मान्ताव्ययाभ्यां यो न।** (काम्यस्तु स्यादेव) किंकाम्यति। स्वःकाम्यति।

**३७४ करणे च।** नाम्नः करणेऽर्थेऽपि यः। नमस्यति ७।

---

१ प्रवहणार्थकनौशब्दः, नावमिच्छतीति नाव्यति, अयं धातुः ख पुस्तके नास्ति। २ त्वां मामिच्छतीति त्वद्यति मद्यति। ३ युवां युष्मान् वेच्छतीति युष्मद्यति। अयुष्मदीत् अयुष्मद्यीत्। ४ चकारान्नाम्न इच्छाऽर्थे काम्यप्रत्ययोऽपि भवतीति भावः। ५ अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमिति परिभाषया 'हसाद्यस्य लोपो वा०' अनेनात्र सलोपो न स्यात् पुत्रकाम्याञ्चकार। अपुत्रकाम्यीत्। ६ गर्गस्यापत्यं पुमानिति तद्धितेन ण्यप्रत्यये कृते सति गार्ग्यः सिद्ध्यति, ततो गार्ग्यमिच्छतीति गार्गीयति। अगार्गीयिष्टाम्। ७ नमः करोतीति नमस्यति श्रेणिको महावीरप्रभुं, पूजयतीत्यर्थः। नमसाञ्चकार नमस्याञ्चकार।

तपस्यति । वरिवस्यति १ ।

**३७५ शब्दादिभ्यो यङ्** २ । शब्दायते । वैरायते ।

**३७६ ञिर्डित् करणे** ३ । नाम्नो ञिः स्यात्करणेऽर्थे स च डित् । घटयति ४ । महयति ।

**३७७ आविष्ठवत् कार्यम्** ५ । स्थवयति । दवयति ।

---

१ वरिवसिता वरिवस्यिता । अवरिवसीद् अवरिवस्यीद् गौतमो महावीरप्रभुं, असेविष्टेत्यर्थः । २ करोतीत्यर्थे । शब्दं करोतीति शब्दायते । शब्दायाञ्चक्रे सिद्धार्थराजा कौटुम्बिकान् । शब्द-वैर-कलह-ओघ-वेग युद्ध-अभ्र-कण्व मम-मेघ-अट-अट्टा-अटाट्या-सीका-सोटा-कोटा-पोटा-प्लुष्वा-सुदिन-दुर्दिन नीहारा एते शब्दादयः । युद्धायते भीमः । मेघायते ग्रीष्मर्तौ वायुः । सुदिनायते शरत् । ३ आचष्टे इत्यर्थेऽप्ययं प्रत्यय इति सुबोधिनीकारसदानन्दगणिः । ४ घटस्याकारान्तत्वाद् ' अत उपधायाः ' सूत्रेण न वृद्धिः, ञित्वादुभयपदं घटयते कुम्भकारः । ' अग्वृलोपिनो नाङ्कार्यम् ' इति सूत्रेण अजघटत् । महान्तं करोति महयति वीतरागसेवा । पटुमाचष्टे करोति वा पटयति । ५ इष्ठप्रत्यये परे गुरु-स्थूल-दूरादीनां गर्-स्थव्-दवाद्यादेशा इत्यादि यद्यत् कार्यं भवति तत्तदत्रापि स्यादिति भावः । दूरं करोति दवयति-ते । ऊढं करोतीति ऊढयति । एवं द्राघयतीत्यादीनामपि वेद्यम् ।

गरयति । ऊढयति ।

३७८ अडि पूर्वढस्य जो वा । औजढत् औडढत् १ ।

३७९ कर्तुर्यङ् । उपमानात्कर्तुराचारेऽर्थे यङ् २ । श्येनायते । पण्डितायते ।

३८० यङि वा सलोपः ३ । पयायते । पयस्यते ।

३८१ अप्सरस्-ओजस्-सुमनसां नित्यम् ४ । अप्सरायते । ओजायते । सुमनायते । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते । स्वमनायत । उदमनायत ५ ।

३८२ नाम्न आचारे क्विब्वा । कृष्णति । कवयति ६ ।

३८३ नामधातोर्वृद्धिर्वा सौ । अकवायीत् अकवयीत् ।

---

१ 'स्वरादेः परः' अनेन ढकारस्य द्वित्वमडागमौ च । औजढः औडढः औजढम् औडढम् । २ ङित्वादात् । पण्डितायाम्बभूव । अपण्डितायिष्ट मूर्खः । ३ उपरितनसूत्रेणागते यङि परे । पय इवाचरतीति विग्रहः । पयायाञ्चक्रे पयसाञ्चक्रे पयस्याञ्चक्रे । पयायिष्यते पयसिष्यते पयस्यिष्यते । ४ यङि परे सलोप इत्यस्यानुवृत्तिः । ५ स्वमनायिष्ट । उदमनायिष्यत । अत्र सु-उदौ उपसर्ग-समानाकारौ । ६ कविरिवाचरतीति कवयति मन्दमतिः । कवयिता । क्विप्प्रत्ययः सकृदागत्य स्वस्यार्थं दत्त्वा लोपं याति ।

**३८४ नमान्तस्योपधाया दीर्घः कौ क्ङिति झसादौ हे च प्रत्यये ।** इदामति । राजानति १ । पथीनति ।

**३८५ आचार उपमानात् ।** कर्मधारयोरुपमानादाचारेऽर्थे यः स्यादस्य चेकारः । पुत्रीयति २ शिष्यमुपाध्यायः । प्रासादीयति ३ कुट्यां भिक्षुकः ।

इति नामधातुप्रक्रिया ।

---

## अथात्मनेपदप्रक्रिया ।

**३८६ निर्विशादेः ।** न्यादिपूर्वकविशादेर्धातोरात्स्यात् ४ । निविशते ।

**३८७ परिव्यवेभ्यः क्रियः ।** परिक्रीणीते ५ ।

**३८८ विपराभ्यां जेः ।** विजयते । पराजयते ६ ।

---

१ राजेवाचरेदिति राजानेत् 'स धातुः' इति धातुसंज्ञा, 'अप् कर्तरि' इत्यप्प्रत्ययः 'या' इतीत्। २ पुत्रमिवाचचारेति पुत्रीयाञ्चकार श्रीरामचन्द्रसूरिं श्रीहेमचन्द्रसूरिः, इति कर्मणो निदर्शनम् । ३ प्रासादे इवाचरति प्रासादीयति, इति चाधारस्योदाहरणम् । ४ निपूर्वकाद् विशधातोर्यथायोग्यं तत्तद्दशानामप्यात्मनेपदं स्यादिति भावः । निविक्षीष्ट । 'हशषान्तात् सक्' न्यविक्षत । ५ विक्रीणीते धान्यम् । अवचिक्रिये । ६ विजिग्ये कुमारपालो मालवेशम् । पराजयेत वीरः शत्रून् ।

३८९ **आङो दाञः स्वीकारे** । विद्यामादत्ते १ ।

३९० **आङि पृच्छेः** । आपृच्छते २ ।

३९१ **शप उपालम्भे** । विप्राय शपते ३ ।

३९२ **समवप्रविभ्यः स्थः** । संतिष्ठते ४ ।

३९३ **आङः प्रतिज्ञायाम्** । शब्दं नित्यमातिष्ठते ५ ।

३९४ **उपान्मन्त्रकरणादिषु** ६ । उपसर्गहरणस्तोत्रेण पार्श्वनाथमुपतिष्ठते मान्त्रिकः ।

३९५ **वा लिप्सायाम्** । प्रभुमुपतिष्ठते । उपतिष्ठति वा ।

३९६ **उद्विभ्यां तपोऽकर्मकात्स्वाङ्गकर्मकाच्च** । उत्तपते सूर्यः । वितपते पाणिम् ७ ।

---

१ 'अपिद्दा-घा-स्थामात इत्०' आदित । २ 'णबादौ पूर्वस्य' 'रः' 'ऋ-संयोगाण्णादिरक्वित्' तेन परस्य न संप्रसारणम् । आपप्रच्छे । लुङि आप्रष्ट आप्रक्षाताम् । ३ शेपे । अशप्त । ४ अवतस्थे । वागभटः प्रास्थित शत्रुञ्जय-तीर्थम । ५ मीमांसकः । ६ आदिग्रहणाद् देवपूजा-सङ्गति-करण-मित्रकरण-पथिषु, क्रमेणोदाहरणावलीयम्—जिनेन्द्रमुपतिष्ठते जिनदत्तः, साधुमुपतिष्ठते धर्मपालः, मित्रमुपतिष्ठते श्रीपालः । कश्मीरमुपतिष्ठतेऽयं पन्थाः । अकर्मकाच्च स्थाधातोरात्मनेपदमिति परे, तेन जिनपाल उपतिष्ठते, स्वयमेवागच्छतीत्यर्थः । ७ सकर्म-कात् तु स्वाङ्गकर्मकादेवात्मनेपदम्, तेन जिनरक्षितः उत्तपति जिनपालस्य पाणिं, घृतं वेत्यादिषु नात्मनेपदम् । उत्तेपे उदतप्त ।

**३९७ आङो यम-हनिभ्यां चाकर्मकाभ्यां स्वाङ्गकर्मकाभ्यां च** । आयच्छते १ । आहते ।

**३९८ हनः सिः कित्** । आहत २ ।

**३९९ समोऽकर्मकेभ्यो गमि-ऋच्छि-प्रच्छि-स्वरत्यर्ति-श्रु-विदि-दृशिभ्यः** । संगच्छते ।

**४०० गमः परौ सि-स्यौ वा कितौ** । संगसीष्ट । संगंसीष्ट ३ ।

---

१ 'गमां छः' आयच्छावहै । आयेमे । 'मो नो धातोः' आयन्ता । आयंस्त आयंसाताम् । २ 'गमां स्वरे' आघ्नाते आघ्नते । 'नो लोपः' आहध्वे । आजघ्ने । 'हनो लुङ्लिङोर्वधः, लुङ्याति वा' आवधिषीष्ट । 'हनृतः स्यपः' आहनिष्यते । 'लोपस्त्वनुदात्ततनाम्' 'लोपो ह्रस्वाज्झसे' आहथाः आहसाथाम् । आवधिष्ट । ३ 'गमां स्वरे' संजग्मे । कित्पक्षे 'लोपस्त्वनुदात्त-तनाम्' इत्यनेन सूत्रेण मलोपे संगसीष्ठाः, अकित्पक्षे संगंसीष्ठाः । संगन्तासे । 'हनृतः स्यपः' इति सूत्रेण नेड्, गमेस्तु पे इति विधानात् सङ्गंस्यते । कित्पक्षे 'लोपो ह्रस्वाद् झसे' समगत समगसत । किदभावे समगंस्त समगंसत । तौदादिकस्य ऋच्छधातोरिह ग्रहणम्, न तु भौवादिकस्य ऋच्छादेशस्य । "ऋच्छेर्नाम्" इत्यामोऽभावः । 'नुगशाम्' 'रः' "ऋच्छेर्लिटि गुणः" समानर्च्छिरे । समृच्छितासे । समार्च्छिषाताम् । 'ऋ-संयोगाण्णादिरकित्'

४०१ क्रीड आङनुसंपरिभ्यश्च। आक्रीडते। अनुक्रीडते। संक्रीडते। परिक्रीडते।

४०२ शब्दे तु न। संक्रीडति चक्रम्।

४०३ निसमुपविभ्यो ह्वयतेः। निह्वयते १।

४०४ स्पर्द्धायामाङः। वस्तुपालः शत्रुमाह्वयते।

४०५ उपपराभ्यां क्रमः। उपक्रमते। पराक्रमते २।

४०६ आङो ज्योतिरुद्गमने। आक्रमते सूर्यः।

४०७ वेः पादविहरणे। साधु विक्रमते वाजी।

४०८ प्रोपाभ्यां प्रारम्भेऽर्थे। प्रक्रमते। उपक्रमते।

४०९ अपह्नवे ज्ञः। शतमपजानीते ३।

---

संपप्रच्छे। सम्प्रक्ष्यते। समप्रष्ट। 'स्वरति-सूति-सूयति०' संस्वरिषीयास्ताम् 'उः' संस्वृषीयास्ताम्। उभयत्र संस्वरिष्यते। भ्वादिह्वादिकस्य-ऋधातोर्ग्रहणं तेन चतुर्षु समृच्छते समियृते इत्यादिरूपाणि स्युः। 'गुणोऽर्त्ति-संयोगाद्योः' समारे समारिषे। 'उः' समृषीष्ट। समर्ता। समरिष्यते। 'सर्त्ति—शास्त्यर्त्ति०' 'ऋवर्णदृशोऽङि गुणः' समारत समारेताम्। संशुश्रुवे। समश्रोष्ट समश्रोषाताम्। विद् ज्ञाने इत्यस्यैवात्र ग्रहणम्। "वेत्तेरन्तो वा रुडाति" संविद्रते संविदते। संपश्यते। संदृक्षीष्ट। समदृक्षत। अकर्मकेभ्य इति किम्? जिनदेशनां संशृणोति शालिभद्रः। १ संजुहुवे। 'लिपि-सिचि०' समह्वत समह्वास्त। २ "स्नु-क्रमोरात्ति नेट्" उपक्रंसीष्ट। पराक्रंस्त। ३ अपजज्ञे।

४१० संप्रतिभ्यां च । शतं संजानीते । प्रतिजानीते ।

४११ वेः शब्दकर्मणः कृञः । शब्दं विकुरुते १ ।

४१२ अवाद्गिरतेः । अवगिरते २ ।

४१३ समः प्रतिज्ञाने । शब्दं नित्यं संगिरते ।

४१४ मनुष्यादीनां संभूयोच्चारणे ३। संप्रवदन्ते द्विजाः।

४१५ अपाच्च । न्यायमपवदते ।

४१६ उदश्चरस्त्यागे । धर्ममुच्चरते त्यजतीत्यर्थः ४।

४१७ उपाद्यमः स्वीकारे । भार्यामुपयच्छते ५ ।

४१८ भुजोऽपालने । ओदनं भुङ्क्ते ।

४१९ कर्मव्यतिहारे धातोरात् ६ । व्यतिराते ।

---

१ व्यकृत। शब्दकर्मण इति किम्? मानम विकरोति मनोजः।
२ अवगिलते । अवजगरे अवजगले । अवगरीतासे अवगरितासे ।
३ वदः इति ख-पुस्तके विशेषः । यजादित्वात् 'णचादौ पूर्वस्य' 'यजां यवराणां०' इति सूत्राभ्यां संप्रसारणम् । समोदे । संप्रवदिताध्वे। संप्रावदिष्ट। ४ त्यागे इति किम ? भक्तामरस्तोत्रमुच्चरति चैत्रः ।
५ "यमः सिः किद्वा विवाहे" इत्यनेन सूत्रेण विकल्पे किति 'नो लोपः' इति नलोपः, उपायत पक्षे उपायंस्त उपायंस्थाः उपायसि। गान्धर्वेण विवाहेन स्वयमेव ह्युपायत, इति त्रिषष्ठौः। ६ अन्यस्य योग्यं कार्यमपरः करोति, अपरस्य चान्यः, स व्यतिहारः, तस्मिन्नर्थे सर्वधातुभ्य आत्मनेपदं स्यात । अन्यो व्यतिस्ते तु ममापि धर्मः, इति भट्टिः । व्यतिररे व्यत्यरास्त ।

**४२० गति-हिंसार्थ-पठ-जल्प-हसेभ्यो नात्।** व्यतिगच्छन्ति। व्यतिघ्नन्ति। व्यतिपठन्ति। व्यतिजल्पन्ति। व्यतिहसन्ति।

**४२१ ज्ञा-श्रु-स्मृ-दृशां सान्तानामात्।** जिज्ञासते १। शुश्रूषते। सुस्मूर्षते। दिदृक्षते।

**४२२ अनुपूर्वाज्ज्ञानातेर्न।** अनुजिज्ञासति २।

**४२३ प्रत्याङ्भ्यां श्रुवो न।** प्रतिशुश्रूषति आशुश्रूषति।

इत्यात्मनेपदप्रक्रिया।

---

## अथ परस्मैपदप्रक्रिया।

**४२४ अनुपराभ्यां कृञः पम् ३।** अनुकरोति। पराकरोति।

**४२५ अभिप्रत्यतिभ्यः क्षिपः पम्।** अभिक्षिपति। प्रतिक्षिपति। अतिक्षिपति।

---

१ [illegible] -आस-बभूव। अजिज्ञासिष्ट। नादिदृक्षन्त दो[illegible] जिज्ञासाञ्च[illegible] [illegible]वज्रामिति द्व्याश्रये। निम्बजानाम्नी देवी। [illegible]शक्तिमसुस्मूर्षन्त नि[illegible] [illegible]न्वजिज्ञासन्त केऽपि तमिति द्व्याश्रय-महाकाव्ये। २ अनुजिज्ञासाञ्चकार। ३ [illegible]आत्मनेपदिनामुभयपदिनां च धातूनां नित्यं पर[illegible] ३ अतः [illegible] अपगः

४२६ प्राद्वहश्च । प्रवहति ।

४२७ परेर्मृषश्च । परिमृष्यति । परिवहति । पर्यवहत् । पर्युवाह ॥

४२८ व्याङ्परिभ्यो रमः पम् । विरमति १ ।

४२९ बुध-युध-नश-जन-इङ्-प्रु-द्रु-स्रुभ्यो ण्यन्तेभ्यः पम् २ । बोधयति । योधयति । नाशयति । जनयति ३ । अध्यापयति ४ ।

इति परस्मैपदप्रक्रिया ।

---

१ आरेमतुः । 'यमि-रमि-नमातां सक् सेरिट् पे' आरंसीत् आरंसिषुः । परिरम्यास्ताम् 'मो नो धातोः' परिरन्तासि । उपारंसीः उपारंसिषम् । २ ण्यन्तत्वेनैतेषां धातूनामुभयपदित्वं प्राप्तं तन्निरोधोऽनेन कृतः । ३ जनधातोर्मित्त्वाद् 'अत उपधायाः' अनेन वृद्धिशङ्का न कार्या । जनयाञ्चकर्थ जनयाञ्चकृव । ४ 'इङ्-क्री-जीनामात्वं णौ' 'रातो णौ पुक्' अध्यापयेत् शास्त्रम् । अध्यापिपन् महर्षिसुधर्माणो निर्ग्रन्थान् । प्रावयति राज्यम् । 'शृणोत्यादीनां०' अपिप्रवत् अपुप्रवत् । द्रावयति लोहम् । अदिद्रवताम् अदुद्रवताम् । स्रावयति तैलम् । असिस्रवः असुस्रवः ।

त्वाद् न मध्यमोत्तमौ, प्रथमातिक्रमे कारणाभावात् प्रथमपुरुषः।
भूयते १ भूयेत। भूयताम्। अभूयत। बभूवे।

**४३९ स्वरान्तानां हन्-ग्रह-दृशां च भाव-कर्मणोः सि-स-ता-सी-स्यपामिड् वा, स इण्वच्च** २। भाविषीष्ट भविषीष्ट। भाविता भविता। भाविष्यते भविष्यते। अभाविष्यत ३।

**४४० इणू तन्यकर्त्तरि।** धातोस्तनि परे भावे कर्मणि च इण् प्रत्ययः, सेरपवादः। 'लुङ्' अभावि। अकर्मकोऽप्युपसर्ग-वशात्सकर्मकतामनुभवति। सुखमनुभूयते स्वामिना।

**फल-व्यापारयोरेकनिष्ठतायामकर्मकः**
**धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः** ४।१।

---

तृतीया स्यात्। भावे प्रथमपुरुषत्वमेकवचनञ्च स्यात्, कर्मणि तु कर्तुरिव प्रथम-मध्यमोत्तमपुरुषाणां कर्मण एक-द्वि-बहुत्वस्य च संभवात् सर्वत्र पुरुषत्रयमेक-द्वि-बहुवचनानि च भवितुमर्हन्ति।
१ भूधातोरकर्मकत्वेन भावे एवास्य प्रयोगो घटते, अत एवात्र प्रथमपुरुष एकवचनं च स्यात्। यक्प्रत्ययस्य कित्त्वेन गुणाभावः, 'स धातुः' इत्यनेन धातुसंज्ञाऽनन्तरं त्यादयः। २ विकल्पेन वृद्ध्यादि-कार्याय इण्वत्करणमिडः। ३ अभविष्यत। ४ चैत्रः शेते, अत्र फल-व्यापारयोरेकनिष्ठता। चैत्र ओदनं पचति, अत्र तु फल-व्या-पारयोर्भिन्नाधिकरणत्वम्।

लज्जा-सत्ता-स्थिति-जागरणं वृद्धि-क्षय-भय-जीवित-मरणम्।
शयन-क्रीडा-रुचि-दीप्त्यर्थं धातुगणं तमकर्मकमाहुः। २।
धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया १। ३।

४४१ शीङोऽयङ् ये क्ङिति। शय्यते २। शिश्ये। शायिषीष्ट शयिषीष्ट। अशायि। 'अर्थाक' घटः क्रियते। त्वं दुःखी क्रियसे रागैः। विरागैः सुख्यहं क्रिये। चक्रे। कारिषीष्ट कृषीष्ट। कारिष्यते 'ह्नृतः स्यपः' करिष्यते। अकारि ३। भाव्यते ४। भावयाञ्चक्रे भावयाम्बभूवे ५।

४४२ इण्वदिटि णेर्लोपः ६। भाविता भावयिता।

---

१ नदी वहति, स्यन्दते इत्यर्थः। जीवति, प्राणान् बिभर्त्ति इत्यर्थः। मेघा वर्षन्ति, जलं वर्षन्ति इत्यर्थः। हितान्न यः संशृणुते स किंप्रभुः, (कुत्सितप्रभुरित्यर्थः) इति किराते, वचनमिति कर्मणोऽत्राविवक्षा। २ शयनार्थत्वादकर्मकः। ३ क्रियेत क्रियेताम् क्रियेरन्। अक्रियन्त तपांसि मेघकुमारेण। अकारिषाताम् अकृषाताम। अकारिषत अकृषत। ४ अयं ण्यन्तश्चुरादिः प्रेरणार्थो वा धातुः। ण्यन्ते सकर्मकत्वात् पुरुषत्रयं वचनत्रयं च सर्वत्र स्याताम्। 'णेः' इति णेर्लोपः, भाव्येते भाव्यन्ते। ५ 'आमो म्वत्तोर्नात् कर्त्तरि' इति सूत्रं नात्र प्रभवति, कर्त्तरि इत्युक्तत्वात्तत्र। भावयामासे भावयामासाते। ६ स्वार्थिको ण्यन्तप्राक्रियिको वा णिर्ग्राह्यः।

भाविष्यते भावयिष्यते। बुभूष्यते १। अबुभूषि। बोभूय्यते २। यङ्-लुगन्तात्तु बोभूयते। स्तूयते गुणवान्। अस्तावि अस्ताविषाताम् अस्तोषाताम् ३। अर्य्यते ४। आरिता अर्त्ता। स्मर्यते। स्मारिता स्मर्त्ता। इज्यते ५।

४४३ तनोतेर्वाऽऽकारो यकि। तायते तन्यते। अतानि। जायते जन्यते ६।

४४४ तपो नेण् कर्मकर्त्तरि, अनुतापे च ७। अन्वतप्त पापेन। 'दादेरिः' दीयते। ददे।

४४५ आतो युक्। इणि ञ्णिति कृति च। दायिषीष्ट दासीष्ट। अदायि अदायिषाताम् अदिषाताम्। धीयते। स्थीयते। ग्लायते। अग्लायि अग्लायिषाताम् अग्लासाताम्। हन्यते। वधिषीष्ट घानिषीष्ट। घानिता हन्ता। अवधि अवधिषाताम्, अघानि अघानिषाताम् अहसाताम् ८।

---

१ सान्तात्। २ यङन्तात्। ३ तुष्टुवे। अस्ताविषत, इडभावपक्षे अस्तोषत। ४ ऋ गतौ। 'रहाद् यपो द्विः' अर्य्यताम्। आरे। ५ 'यजां यवराणां ग्वृतः संप्रसारणं किति' ईजे। ६ 'जन-सनखनाम्०' इति वाऽऽत्वम्। जायेत जन्येत। जनि-तन्योर्वाऽऽत्वं यकि, इति ख-पुस्तके पाठः। ७ अनयो-र्विषये 'इण् तन्यकर्तरि' इत्यनेन तप इण् न स्यात्। ८ 'पूर्वाद्धन्तेर्हस्य घः' अघने रावणो लक्ष्मणेन। 'हनो लुङ्-लिङो-र्वधः, लुङ्यात्ति वा' वधिषीरन्, इण्वद्भावपक्षे वधादेशाभावस्तेन

**४४६ इण्वदिटो न दीर्घः** १ । ग्राहिता ग्रहीता । अदर्शि अदर्शिषाताम् अदृक्षाताम् २ । शम्यते ३ मुनिना ।

**४४७ मान्तस्य सेटो** ४ **न वृद्धिरिणि ञ्णति कृति च, न त्वाचमि-कमि-वमीनाम्** । अशमि । अदमि । आचामि । अकामि । अवामि । ञ्यन्तस्य तु शम्यते मोहो मुनिना । शमयाञ्चक्रे ।

**४४८ मितां ञ्यन्तानामिणि णमि च वा दीर्घः** । अशामि अशमि अशामिषाताम् अशमिषाताम् अशमयिषाताम् ५ । वध हिंसायाम् । अवधि ६ ।

**४४९ भञ्जेरिणि नलोपो वा** । अभाजि । अभञ्जि ।

---

घानिषीरन् स्यात्, 'हनो घत्' सूत्रे इण्वर्जितविधानान्नात्र घदादेशः कल्पनीयः ।

१ 'इटो ग्रहाम्' सूत्रस्य बाधकमिदम् । इण्वद्भावपक्षे तु तत्सूत्रं लगत्येव ग्रहीतासे त्वया दीक्षा । २ दृश्यते मतिसागरेण जिनपतिप्रतिमा । अत्र 'दृशादेः पश्यादिः' इत्यस्य न प्राप्तिः, कर्तरीत्युक्तत्वात्तत्र । दर्शिषीष्ट 'सि-म्योः' दृक्षीष्ट ; ३ दिवादिकोऽकर्मकत्वाद्भावे प्रयुज्यते । ४ मकारान्तसेड्धातोः । ५ इण्वद्भावपक्षे ञेर्लोपो न स्यात् । 'ध्वे सिलोपः' अशमयिढ्वम् अशामयिध्वम् । ६ वध्येते । ववधे । इणि 'जनि-वध्योर्न वृद्धिः' अवधि अवधिषत अवधिष्ठाः ।

काष्ठेन । लेनोक्ते (लकारेणोक्ते) कर्मकर्त्तरि यक्-आत्-इण्-इण्वदिटः स्युः । पच्यते ओदनः १ । अपाचि । भिद्यते काष्ठम् । अभेदि ।

इति कर्मकर्तृप्रक्रिया ।

---

१ कर्मकर्तृप्रयोगे द्विकर्मकभिन्नस्य सकर्मणोऽपि धातोरकर्मकत्वं स्यात् । ओदनमिति पूर्वावस्थं कर्म, तच्चात्रातिशयद्योतनार्थं कर्तृत्वेन विवक्षितम् ।

इति श्रीजिनचन्द्रसूरिणा प्रणीते सिद्धान्तरत्ने
शब्दानुशासने आख्यातवृत्तिः
परिपूर्तिमगात् ॥

# अथ कृदन्तप्रकरणम् ।



१ कृत्कर्त्तरि १ । वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि ज्ञेयाः ।

२ तृ-वुणौ । धातोस्तृ-वुणौ प्रत्ययौ स्तः २ ।

३ कृतः । वसादेः कृत इट् स्यात् ३ । भविता । पक्ता ।

---

**जगद्धितवचनाय शान्तिकर्त्रे महीयसे ।**
**श्रीवीराय नतिं कृत्वा टिप्पणं क्रियते कृतः ॥ १ ॥**

१ यस्मिन् सूत्रे कर्मणि भावे इति नोक्तं स्यात् ते प्रत्ययाः कर्तरि वेदितव्याः । २ एतौ प्रत्ययौ सर्वेभ्यो धातुभ्यो भवितुमर्हतः, तेन अत्ता, होता, देविता, इत्यादि स्यात् । कृत्-प्रत्ययान्ता धातवो नामसंज्ञां लभन्ते कृत्-तद्धित-समासान्तानां प्रातिपदिक( नाम )संज्ञा भवतीति नियमात् । नामसंज्ञाऽनन्तरं 'तस्मात् सि-औ-जस्०' अनेन स्यादयः सप्त विभक्तयो भवन्ति । ततश्च पदसंज्ञा स्यात् । ३ ये धातवः सेटस्तेभ्य एव कृत इट् स्यान्नानिड्भ्यः । ये वेटस्तेभ्यो विकल्पेनेड् स्यादेव । भवतीति भविता भवितारौ । भवितारम् भवितॄन् इत्यादीनि कर्तृवद् रूपाणि ज्ञेयानि ।

४ **युवोरनाकौ।** १ वाचकः। पाचकः। दायकः।

५ **नाम्युपधात्कः** २। क्षिपः। बुधः। वृतः।

६ **प्री-कृ-ज्ञाभ्यश्च** ३। प्रियः। किरः। ज्ञः।

७ **उपसर्गे आदन्तात्** ४। प्रदः। सुग्लः।

८ **पचि-नन्दि-ग्रहादेर-यु-णिनिः।** पचादेरः। नन्द्यादेर्युः। ग्रहादेर्णिनिः। पचः। वदः। चरादीनां वा द्वित्वं पूर्वस्य आक् अप्रत्यये ५। चराचरः। चलाचलः। हन्तेर्हस्य घत्वं च वा ६

---

१ स्पष्टमिति क-ख-पुस्तकयोर्विशेषः। युकारस्यानः, वुणः अक आदेशः स्यात्। तयोरकारान्तत्वाद् देव-जिनवद्रूपाणि। 'आतो युक्' दायकः। गायतीति गायकः। २ कस्य कित्त्वाद् गुणो न स्यात्। ३ प्रीञ् तर्पणे। कॄ विक्षेपे। जानातीति ज्ञः, कित्त्वाद् 'आतोऽनपि' इत्यनेन सूत्रेणाऽऽकारस्य लोपः। ४ उपसर्गपूर्वादादन्तधातोः कः प्रत्ययः स्यात्। ५ अत्र स्थाने 'चराचरादयो निपात्याः' इत्येव पुस्तकद्वये पाठः। चरि-चलि-पति-वदयश्चरादयः। पतापतः। वदावदः। आगागमसामर्थ्यादत्र 'ह्रस्वः' 'पूर्वस्य हसादिः शेषः' इत्यादिसूत्राणि न लगन्ति। ६ हन्तेर्द्वित्वं पूर्वस्य हस्यं घत्वं वाऽप्रत्यये परे, चकारात् पूर्वस्य आक्, उत्तरहस्य तु 'पूर्वाद्धन्तेर्हस्य घः' इति घः। घनाघनो घनो मेघः, इति **धनञ्जयनाममाला**। पक्षे हन्तीति हनः। ततो वेगानलोत्पातपतापतघनाघनः, इति **त्रिषष्टिचरित्रे**।

घनाघनः । पाटूपटः १ ॥ नन्दनः २ । वर्धनः । क्रमणः । शोभनः । साधनः ॥ ग्राही । उत्साही । अवाची ३ । अपराधी ४ ।

९ दृशादेः शः । दृश्-पा-घ्रा-ध्मा-धेटां शः ।

१० शिति चतुर्वत् कार्यम् ५ । पश्यः । पिबः । जिघ्रः । धमः । धयः ६ ।

११ घ्रः संज्ञायां न शः ७ । व्याघ्रः ।

१२ ज्वलादेर्णः ८ । ज्वालः । तापः ।

१३ आदन्ताच्च । दायः । पायः ।

---

१ " पाटेर्णिलुक् चोक् दीर्घश्च पूर्वस्य " पूर्वं णिलुक् ततो द्वित्वं तत ऊगागमपूर्वदीर्घौ स्तः, पाटयतीति पाटूपटः, पक्षे पाटः। २ नन्द्यादिः 'युवोरनाकौ' नन्दनः (आह्लादकः) । ३ न वक्तीति अवाची 'नञ्' इति तत्पुरुषसमासः 'इनां शौ सौ' इति दीर्घः । ४ अपराध्यतीति अपराधी । ५ चतुर्षु तिबादिप्रत्ययेषु यत्कार्यं भवेत् तत् शित्प्रत्ययेऽपि भवेदिति भावः । ६ धयतीति धयः । स्तनं धयतीति स्तनंधयो बालः । ७ इदं सूत्रं पुस्तकद्वयेऽपि नास्ति । विशेषेण आजिघ्रतीति व्याघ्रः 'उपसर्गे आदन्तात्' इति कः 'आतोऽनपि' इति आलोपः । ८ ज्वल ज्वलने । तप संतापे । णित्त्वात् 'अत उपधायाः' इति वृद्धिः ।

१४ कार्येऽण् । कर्मण्युपपदे धातोरण् स्यात् । कुम्भकारः १ ।

१५ आतो डः । कर्मण्युपपदे आदन्तात् डः स्यात् । गोदः । धनदः ।

१६ नाम्नि च । नाम्न्युपपदे धातोर्डः स्यात् । द्विपः २ । द्विजः ।

१७ उरगादयो निपात्याः । उरगः उरङ्गः ३ । भुजगः भुजङ्गः । तुरगः तुरङ्गः । विहगः विहङ्गः ।

१८ अटौ । नाम्नि कार्ये चोपपदे धातोरटौ स्तः । कर्णेजपः ४ । कुरुचरः । पूजाऽर्हः । यशस्करः ।

---

१ शास्त्रं करोतीति शास्त्रकारः । सम्मतितर्कं ( तर्कग्रन्थं ) करोतीति सम्मतितर्ककारः सिद्धसेनदिवाकरः । २ द्वाभ्यां मुख-शुण्डाभ्यां पिबतीति द्विपो हस्ती । द्वाभ्यां जन्म-संस्काराभ्यां जायते इति द्विजो विप्रः । गृहैर्दारैः सह गृहे वा तिष्ठतीति गृहस्थः । नाममात्रोपपदे सति डः स्यात् । डित्वात् टिलोपः । ३ उरसा गच्छतीति उरगः सर्पादिः, भुजाभ्यां गच्छतीति भुजगो नकुलादिः, तुरेण रंहसा गच्छतीति तुरगः अश्वः, विहायसा व्योम्ना गच्छतीति विहगः शुकादिखेचरः । ४ कर्णेजपस्तु दुर्जनः, इति हैमः । कर्णे जपतीति सप्तम्यलुक्समासः। पूजामर्हतीति पूजाऽर्हो वीतरागः । यत्र टप्रत्ययस्तत्र स्त्रियां

१९ इ-ख-खि । नाम्नि कार्ये चोपपदे धातोरि-ख-खि इत्येते स्युः १ । शकृत्करिः । फलेग्रहिः २ ।

---

'ट्वितः' सूत्रेण ईप् स्यात्, तेन यशस्करी विद्या इत्यादि सिद्ध्यति । एवं कर्म करोतीति कर्मकरः, पार्श्वशयः, धर्मकरः, स्तम्बेरमः इत्यादिप्रयोगा अनेनैव सूत्रेण सिध्येयुः ।

१ एभ्य इप्रत्ययः स्यात्—

शकृत्-स्तम्बात् कृञः, फले-रजो-मलाद् ग्रहः, हृञः ।
दृति-नाथाद्, देव-वातादापः कर्तरि वाच्य इः ॥ १ ॥

एभ्यः खप्रत्ययः स्यात्—

करीष-कूल-सर्वाभ्रात् कषः, प्रिय-वशाद् वदः ।
ऋति-मेघ-भयात् कृञः क्षेम-भद्र-प्रियात्तु वा ॥ १ ॥
आशिताच्च भुवो भावे करणे च, तुराद् भुजात् ।
विहायसः सुतोरोभ्यां हृदयाच्च जनात् प्लवात् ॥ २ ॥
गच्छतेः प्रत्ययः खः स्याद्, ज्ञेयं छात्रैर्यथायथम् ।

एभ्यः खिः स्यात्—

वर्या वदन्ति विद्वांसो भृञो धातोस्तु खिर्भवेत् ।
आत्मन्-कुक्ष्युदरेभ्यश्च सम्यग् बोध्यं मनीषिभिः ॥१॥

२ फलानि गृह्णातीति फलेग्रहिः, एदन्तत्वं निपात्यते । एवं स्तम्बकरि-दृतिहरि-नाथहरि-देवापि-वातापयोऽपि बोध्याः । इ-खि-प्रत्ययान्तानां हरिवद्रूपाणि ।

२० **खिति पदस्य** । खिति परेऽनव्ययस्य पूर्वपदस्य मुम् [१] । सर्वंकषः ।

२१ **वाचंयमादयो निपात्याः** [२] । वाचंयमः । द्विषंतपः । परंतपः । उदरंभरिः । आत्मंभरिः ।

२२ **एजां खश्** । जनमेजयः [३] । पण्डितंमन्यः । अरुंतुदः ।

---

१ खिदन्ते उत्तरपदे पूर्वपदस्य मुम्. इति क-पुस्तके पाठः, मुमस्थाने नुम् इति ख-पुस्तके पाठः । कूलं कषतीति कूलंकषा सरित् । करीषंकषः पवनः । अभ्रंकषो वातः । २ ये प्रयोगाः सूत्रैर्न सिध्यन्ति ते निपात्याः । वाचं यच्छतीति वाचंयमो मुनिः ( मौनव्रतधारी ) । परं शत्रुं तापयतीति परतपः । आत्मानं बिभर्तीति मुमनन्तरं 'नाम्नो नो०' इति नस्य लोपः, आत्मंभरिः स्वार्थैकलम्पट इत्यर्थः । ३ एजृ कम्पने । जनं एजयतीति जनमेजयः । आत्मानं पण्डितं मन्यते इति विग्रहः ।

एभ्यः खश् स्यात्—

ण्यन्तैजेः, मन्यतेः, मुञ्ज-कूलास्य—पुष्पतो धयेः ।

नाडी-मुष्टी-शुनी-पाणि-कर-स्तनात् सनासिकात् ॥ १ ॥

मुञ्जंधयः । पुष्पंधयः । स्तनंधयो बालः । "खशन्ते पूर्वपदस्यानव्ययस्य ह्रस्वः" धेड्-ध्माधात्वोरैक्यं तेन मुष्टीं धयतीति मुष्टिंधयः मुष्टिंधमः । नासिकंधयः नासिकंधमः । नाडिंधयः नाडिंधमः । करंधयः करंधमः इत्यपि स्यात् ।

२३ भजां विण् १ ।

२४ वेर्लोपः ।

२५ सहेः षः साढि २ । साढिरूपे सति सहेः सस्य षः स्यात् । तुराषाट् । भारवाट् ।

२६ अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विः ३ । (च्वौ दीर्घ ई चास्य) च्वौ अवर्णस्य ईः, इदुतोर्दीर्घः । शुक्लीकरणम् । हेतूकृतम् ।

२७ च्वौ सलोपः ४ । सुमनीभावः ।

---

१ भज-सह-वहाम् । विणो वेर्लोपः, णकारो वृद्ध्यर्थः । सुखं भजतीति सुखभाक् ग्, एवं दुःखभाक्, धर्मभाक् । २ सहेस्साढि इति क-ख-पुस्तकयोः पाठः । तुरां वैरिवेगं सहते इति तुराषाट्-ड् इन्द्रः । भारं वहतीति भारवाट्-ड् 'वावसाने' । शसादौ स्वरे तु 'वाहो वौ शसादौ स्वरे' सूत्रेण भारौहः । भारौहा । भारौहे इत्यादि । एवं विश्ववाडादिः । ३ पूर्वं न भवेत् पश्चाद्भवति सोऽभूततद्भावस्तस्मिन् । अशुक्लं शुक्लं करणमिति शुक्लीकरणम् । मालीभवनम् । अग्नीस्याद् । अहेतुर्हेतुः कृतमिति हेतूकृतम् । ४ अरुष्-चक्षुष्-मनस्-चेतस्-महस्-रहस्-रजस्-सर्पिषादीनां च्वौ परे सलोपो भवेत् । यथा च द्व्याश्रयमहाकाव्ये—

अरूकुर्वन् रजीकुर्वन् संमुखीभवतो रणे ।
अस्मानप्युन्मनीकुर्वन् न्यूनीस्यादाह्नकः कुतः ? ॥१९-२६॥
उच्चक्षूभवतोऽचेतीभवतो मूर्च्छया भटान् ।
रहीभूते रणे नाहन् यः श्लाघाऽर्हः कथं न सः ? ॥१९-२७॥

२८ क्वचिड्डा । दुःखाकरोति १ । द्विगुणाकरोति ।

२९ अव्ययस्य च्वावीत्वं न । दोषाभूतं दिनम् । दिवाभूता रात्रिः ।

३० आतो मनिप्-क्वनिप्-वनिपः । नाम्न्युपपदे २ आदन्ताद्धातोरेते प्रत्ययाः स्युः । सुदामा ।

३१ स्थामि । तादौ किति दो-षो-मा-स्थामिः स्यात् ३ ।

३२ शा-छोर्वा ।

३३ अपिद्दा-धा-मा-गै-हाक्-पिबतीनामीः किति हसे, क्विपि वा, न तु क्यपि । सुपीवा ४ ।

---

१ अदुःखं दुःखं करोतीति दुःखाकरोति विषयः । किन्नविषये नाम्नः मात् प्रत्ययोऽपि वा भवति, मातः सत्य षत्वं न स्यात्, यथा-अनग्निरग्निर्भवतीत्यग्निसाद्भवति । २ प्रादुप-सर्गानामपि नामसंज्ञा, तेन तेषामपि ग्रहणमत्र । पित्त्वात् तुक्, कित्त्वान्न गुणः, इकारस्येत्संज्ञा । सुष्ठु ददातीति सुदामा, नान्त-त्वात् 'लोपधायाः' 'नाम्नो नो लोपशधौ' इत्यादिसूत्रै राजन्वद्रूपाणि स्युः । अश्वे तिष्ठतीति अश्वत्थामा, निपातादत्र सकारस्य तकारः । ३ दो अवखण्डने दितम्, षो अन्तकर्मणि अवसितम्, मा माने मितम्, अवस्थितम्, सर्वत्र तेनेति तृतीयान्तः कर्ताऽध्याहार्यः । ४ सुष्ठु पिबतीति सुपीवा, अत्र क्वनिप् ।

३४ अनादन्तादपि । सुकर्मा १ ।

३५ ह्रस्वस्य पिति कृति तुक् २ । प्रातरित्वा ।

३६ क्विप् । धातोः क्विप् स्यात् ३ । कर्मकृत् । अग्निचित् । सोमसुत् । सोमपाः ।

---

१ सुष्ठु करोतीति सुकर्मा । सुष्ठु शृणातीति सुशर्मा । अपिशब्दान्निरुपपदेभ्योऽपि, तन सुत्वा, धीवा, पीवा, इत्यादि । २ तुक् आगमो न तु प्रत्ययः, कित्त्वादन्ते, उक् इत्यस्येत्संज्ञा । इण् गतौ, प्रातरेतीति प्रातरित्वा, अत्र क्वनिप्, क्वनिपः कित्त्वाद् धातोरगुणः, पित्त्वाद् धातोस्तुगागमः, नकारान्तत्वाद् यज्वन्-वद्रूपाणि । "वनिपि जनस्याऽऽत्वम्" विजायत इति विजावा विजावानौ । ओणृ अपनयने, ओणतीति अवावा, अत्र णकारस्याऽऽत्वे, ओकारस्यावादेशः, राजन्वद्रूपाणि । "ईपि वनो नस्य रो वाच्यः" इत्वरी अवावरी इत्यादि । ३ सोपपदेभ्यः केवलेभ्यो वा सर्वधातुभ्यः क्विप् स्यात् । क्विपि कपावित्संज्ञकौ 'वेर्लोपः' इति विलोपः । क्विप्प्रत्ययो धातोर्नामत्वं विधाय सर्वथा लुप्यतीति भावः । कर्म करोतीति कर्मकृत्-द्, ह्रस्वत्वात् तुक् 'वावसाने' शेषं भूभृद्वद् । सोमनाम्नीं लतां पिबतीति सोमपाः । शसादौ स्वरे तु 'आतो धातोर्लोपः' सोमपः । सोमपा इत्यादि । तीर्थं करोतीति तीर्थकृत् । धर्मदीपिकां करोतीति धर्मदीपिकाकृत् श्रीमङ्गलविजयोपाध्यायवर्यः । केवलाद् यथा-दिशतीति दिक् । पश्यतीति दृक् । भिनत्तीति भिद् इत्यादि ।

३७ वचि-प्रच्छि-आयतस्तु-कटप्रु-जु-श्रीणां दीर्घोऽसंप्रसारणं च क्विपि १ । वाक् । तत्त्वप्राट् । सुश्रीः ।

३८ ध्यायतेः क्विपि संप्रसारणम् । सुधीः ।

३९ गमादीनां नमस्य लोपः क्विपि, क्यपि वा, द्वित्वं च २ । गच्छतीति जगत् ।

४० आशासः क्वावुपधाया इत्वम् । आशीः ३ ।

४१ क्विति झसे क्वौ ञसे च छस्य शो वस्य ऊः । अक्षद्यूः ४ ।

४२ रेफाच्छ्वोर्लोपः । मूः ५ । धूः ।

---

१ वचि-प्रच्छ्योरसंप्रसारणम् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते इति कटप्रूः । जु गतौ, जवतीति जूः । सुष्ठु श्रयतीति सुश्रीः । एवं क्विबन्तेषु नहि-वृति-व्यधि-वृषि-रुचि-सहि-तनिषु परेषु पूर्वपदस्योपसर्गकारकस्यान्तस्य दीर्घो विधेयः । 'नहो धः' उपानत् । नीवृत् । मर्माणि विध्यतीति मर्मावित् । वृष वृष्टौ प्रावृड् । नीरुक् । २ गम्-यम्-नम्-हन्-तनादीनाम् । अङ्गं गच्छतीति अङ्गगत् । सुष्ठु यच्छतीति सुयद् इत्यादि । "द्युति-गमि-जुहोतीनां क्विपि क्वचिद् द्वित्वम्" दिद्युत् । जगत् । "जुहोतेर्दीर्घः" जुहूः । ३ आशास्ते इति 'य्वोर्वि हसे' आशीः । ४ अक्षैर्दीव्यतीति अक्षद्यूः । ५ मुर्च्छा मोह-समुच्छ्राययोः, मूर्च्छतीति मूः । धुर्वि हिंसायाम्, धूर्वतीति धूः ।

४३ दृशेष्टक्-सकौ चोपमाने कार्ये । उपमाने कर्मण्युपपदे दृशेष्टक्-सकौ स्तः, चात् क्विप् १ ।

४४ आ सर्वादेः । सर्वादेष्टेरात्वं स्याद्, एषु परेषु २ । तादृशः । तादृक्षः । तादृक् ।

४५ किमिदमः कीश् । किमः कीः, इदम ईश् स्याद् । दृक्-दृश-दृक्षेषु । कीदृक् । कीदृशः । कीदृक्षः । ईदृशः ।

४६ अदसोऽमूः ३ । अमूदृशः ।

४७ णिनिरतीते । धातोरतीते काले शीले च णिनिः

---

१ सूत्रस्थचकारात् क्विबपि भवति । २ दृक्-दृश-दृक्षेषु । स इव दृश्यतेऽसाविति टक्प्रत्यये तादृशः । स्त्रियां तु 'टिड्ढाणञ्' सूत्रादीप् तादृशी । सक्प्रत्यये 'छशषराजादेः षः' 'षढोः कः से' इति तादृक्षः । स्त्रियां तादृक्षा । कस्यचिन्मते सक् टित्, तेन 'टिड्ढाणञ्' तादृक्षी । क्विपि त्रिषु लिङ्गेषु तादृक् । एवमन्य इव दृश्यतेऽसाविति अन्यादृशः इत्यादि । प्रयोगश्च-युष्मादृशामकरुणैकशिरोमणीनां सर्वसहाऽपि विरमत्यनुषङ्गपापात्, इति सत्यहरिश्चन्द्रनाटके । दृशादिषु परेषु युष्मदस्मदोरेकवचने 'त्वन्मदेकत्वे' इत्यनेन त्वत्-मदादेशौ भवतः । त्वमिव दृश्यतेऽसाविति त्वादृशः त्वादृक्षः त्वादृक् । एवं मादृशः मादृक्षः मादृक् । समान इव दृश्यत इति सदृशः इत्यादि । ३ दृशादिषु परेषु ।

३७ वचि-प्रच्छि-आयतस्तु-कटप्रु-जु-श्रीणां दीर्घोऽसंप्रसारणं च क्विपि १ । वाक् । तत्त्वप्राट् । सुश्रीः ।

३८ ध्यायतेः क्विपि संप्रसारणम् । सुधीः ।

३९ गमादीनां मस्य लोपः क्विपि, क्यपि वा, द्वित्वं च २ । गच्छतीति जगत् ।

४० आशासः कावुपधाया इत्वम् । आशीः ३ ।

४१ क्विति झसे कौ ञ्बे च छस्य शो वस्य ऊः । अक्षद्यूः ४ ।

४२ रेफाच्छ्वोर्लोपः । मूः ५ । धूः ।

---

१ वचि-प्रच्छ्योरसंप्रसारणम् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते इति कटप्रूः । जु गतौ, जवतीति जूः । सुष्ठु श्रयतीति सुश्रीः । एवं क्विबन्तेषु नहि-वृति-व्यधि-वृषि-रुचि-सहि-तनिषु परेषु पूर्वपदस्योपसर्गकारकस्यान्तस्य दीर्घो विधेयः । 'नहो धः' उपानत् । नीवृत् । मर्माणि विध्यतीति मर्मावित् । वृष वृष्टौ प्रावृट् । नीरुक् । २ गम्-यम्-नम्-हन्-तनादीनाम् । अङ्गं गच्छतीति अङ्गगत् । सुष्ठु यच्छतीति सुयद् इत्यादि । "द्युति-गमि-जुहोतीनां क्विपि क्वचिद् द्वित्वम्" दिद्युत् । जगत् । "जुहोतेर्दीर्घः" जुहूः । ३ आशास्ते इति 'र्वोर्वि हसे' आशीः । ४ अक्षैर्दीव्यतीति अक्षद्यूः । ५ मुर्च्छा मोह-समुच्छ्राययोः, मूर्च्छतीति मूः । धुर्वि हिंसायाम्, धूर्वतीति धूः ।

५० मुगानेऽतः । अतः शाने मुक् स्यात् । पचमानः ।

५१ आसेरान ईः । आसीनम् ।

५२ विदेर्वा वसुः । विद्वान् १ । विदन् ।

५३ भविष्यति स्यपः शतृ-शानौ । करिष्यन् । करिष्यमाणः ।

५४ आद्दतः किर्द्विश्च भूते । आदन्तादृदन्ताज्जनि-गमि-नमिभ्यः किः प्रत्ययः स्याद्भूते शीले, धातोश्च द्वित्वम् । पपिः२। चक्रिः । जनिः । नेमिः । जग्मिः ।

५५ कसु-कानौ णबेवत् ३ । धातोरतीते काले एतौ स्तः। तौ च णबेवत् । ततो द्वित्वम् । चकृवान् । चक्राणः ।

---

१ वेत्तीति विद्वान् 'ञिनो नुम' 'न्सम्महतो०' विद्वांसौ । शसि तु 'वसोर्व उः' विदुषः । शतृपक्षे विदन् विदन्तौ । शसि विदतः । २ आदन्ताः—पा पाने 'आतोऽनपि' पपिर्नाम पीतवान् पानशीलः । एवं दधिः, ददिः । ऋदन्ताः—'ऋ श्म्' वव्रिः । आजह्रिः । दध्रिः । यथा चोक्तं मुनिहिमांशुविजयेन—

पपिर्नीरं महात्मा स चक्रिर्ध्यानं ततो महत् ।
स्वस्थो जज्ञिः पुरं जग्मिर्नेमिर्मुदा जिनेश्वरम् ॥ १ ॥

नम्धातोः पचादितुल्यत्वेन पूर्वलोप एकारश्च । ३ णबेवदिति वचनाद् द्वित्वं पचसदृशानां पूर्वलोपादिकार्यं च स्यान्न तु वृद्धिः,

**५६ द्वित्वे सत्येकस्वरादादन्ताद् घसेश्च वसोरिड् नान्यस्मात् १।** जक्षिवान्।

**५७ गम-हन-विद-विश-दृशां वा ।** जग्मिवान् २। जगन्वान्।

**५८ क्त-क्तवतू ।** धातोरतीते काले एतौ स्तः। क्तो भाव-

---

यतस्तत्र ककारौ वृद्धि-गुणप्रतिषेधकौ, उकारो 'ञितो नुम्' 'ष्ट्रञितः' इत्यादिसूत्रसाफल्यार्थकः। भूतकालमात्रे एतौ प्रत्ययौ परस्मैपद्यात्मनेपदिभ्यो धातुभ्यो यथाक्रमं भवेताम्। प्रयोगश्च **धर्मदीपिकाप्रशस्तौ–**

ततो बभूवत्सु महामहस्सु सूरिष्वनेकेषु तदीयपट्टे।

क्रमाद् बभूवान् प्रभुहीरसूरिः सूरीन्द्रमौलिमुकुटायमानः॥१॥

स्त्रियां तु 'ष्ट्रञितः' 'वसोर्व उः' 'ऋ रम्' चक्रुषी, बभूवुषी इत्यादि। काने भेजानः, पेचानः। १ द्वित्वे सत्येकस्वरा यथा-अद् भक्षणे, आद इति आदिवान् आदिवांसौ। शसादौ तु 'वसोर्व उः' इति वस्य उः, 'निमित्ताभावे नैमित्तकस्याप्यभावः' अनया परिभाषया इडभावः आदुषः। आदुषा। ऋ गतौ, आर इति आरिवान्। आरुषः। स्त्रियां आरुषी। आदन्ता यथा–ददरिद्रिवान् 'आतोऽनपि'। नान्यस्मादिति किम्? बभूवान्। जिजिवान्। २ 'गमां स्वरे' जग्मिवान्, इडभावे 'मो नो धातोः' जगन्वान्। 'हनो घ्ने' जघ्निवान् जघन्वान्। एवं विदादीनामपि रूपाणि स्युः।

कार्ययोः। क्तवतुस्तु कर्तर्येव। कृतः कटः १। घटं कृतवान् कुलालः।

५९. **गत्यर्थादकर्मकाच्च कर्त्तरि क्तः**। गङ्गां गतः। स्थितः।

६० **नमान्तस्य क्ङिति झसे दीर्घः कौ च** । शान्तः। दान्तः ।

६१ **श्लिषू-शीङ्-स्था-आस्-वस्-जन्-रुह्-जीर्यतिभ्यश्च** २ । रामः सीतामाश्लिष्टः । शय्यामधिशयितः । स्वर्गमधिष्ठितः । देवमुपासितः । व्रतदिनमुपोषितः । तमनुजातः । वृषमारूढः । जगदनुजीर्णः ।

६२ **क्तो वा सेट्** । उदुपधात् सेट् क्तो वा कित् ३ । द्युतितं द्योतितम् ।

---

१ डुकृञ्धातोः सकर्मकत्वादत्र कार्ये क्तोऽस्ति, ततः कारुणा इति कर्त्तुरध्याहारः । अनयोः प्रत्यययोः पदनियमो नास्ति, तेन सर्वधातुभ्यो भाव–कर्मणोः क्तः, कर्तरि तु क्तवतुः स्यात् । दृष्टः दृष्टवान् ।पुरा पराऽऽरोहपराभवस्यावश्याः कशाकष्टमदृष्टवन्तः, इति कविशेखरश्रीजयशेखरैर्विरचिते जैनकुमारसम्भवे। २ कर्तरि भावकार्ययोश्च क्तः। यद्यप्येते धातवो निष्कर्मकास्तथाऽप्यकर्मकोऽप्युपसर्गवशात् सकर्मकतामनुभवतीति वचनात् सोपसर्गतयैतेषां सकर्मकत्वे कर्तरिप्रयोगेऽपि क्तः प्रत्ययो भवेदिति तात्पर्यम् । ३ क्षान्त्यर्थकमृष्धातोश्चेत्यपि योज्यम्, संमृषितं संमर्षितमिति प्रयोगद्वितयोपलब्धेः ।

**६३ शीङादिभ्यः सेटौ क्त-क्तवतू न कितौ** १ । शयितः । शयितवान् ।

**६४ कितः** । उवर्णान्ताद्दवर्णान्तात् श्वि-श्रिभ्यां च परस्य कित इण्न । भूतः । वृतः । श्रितः २ ।

**६५ वेञो ह्रस्वः** । उतम् ३ ।

**६६ आदीदितः** । आदित ईदितश्च क्त-क्तवत्वोर्नेट् ।

**६७ ञीतां क्तो वर्तमानेऽपि** । ञीतां धातूनां मति-बुद्धि-पूजार्थानां च वर्तमानेऽपि क्तः ४ ।

---

१ आदिग्रहणात् स्विदि-मिदि-क्ष्विदि-धृष-पूङां ग्रहणम् । प्रसिष्विदे इति प्रस्वेदितः प्रस्वेदितवान् । एवं क्ष्वेदितः इत्यादि । पूङ् शोधनार्थकः, पूङ् पवने इति सदानन्दगणयः । " पूङः वा क्तिस्तस्येट् " पवितः पूतः । पवितवान् पूतवान् । २ वीरं बुधाः संश्रिताः । सुषावेति सुतवान् । अस्तावीदिति स्तुतवान् । नुतः । अकारीति कृतः । दध्रे इति धृतः । अतारीदिति तृतवान् । टुओ-श्विइर् गति-वृद्ध्योः, " श्वयतेः संप्रसारणस्य दीर्घत्वं क्ते" शूनः शूनवान् , 'स्वाद्योदितश्च' इति भाविसूत्रेण तस्य नत्वं भवति । ३ किति ते । वेञः संप्रसारणानन्तरमूकारस्य ह्रस्वत्वे उतम् इति रूपं भवति क्लीबे । ४ ञिरिद्येषां ते ञीतस्तेषां । ञिमिदा स्नेहने, उत्तरसूत्रेण तकारस्य दकारस्य च नत्वे कृते मिद्यते इति मिन्न स्यात्, मिद आकारेत्त्वात् " भावे कर्तरि चाऽऽदितः

६८ दस्तस्य नो द्श्च । दात्परस्य क्तिस्तस्य नत्वं स्याद् दस्य च । भिन्नम १

६९ अदो जग्धुः २ । क्तिति ते । जग्धम् ।

७० रः । रेफात् क्तिस्तस्य नत्वं स्यात् । कीर्णम् ३ । जीर्णम् ।

---

क्तस्येड् वा" 'शीङादिभ्यः सेटौ०' इति सूत्राभ्यां सेट्पक्षे मेदितं भवति । एवं ञिष्विदा-ञिक्ष्विदाप्रभृतीनामपि विज्ञेयम् । प्रस्तुतसूत्रे 'वर्तमानेऽपि' इत्यत्रापिशब्दनिबन्धनाद् ज्ञा-पूजा-इच्छामत्यर्थानां शीलादीनाञ्च धातूनां वर्तमानकालेऽपि कर्तरि कर्मणि भावे च क्तप्रत्यय स्यात् । जानातीति ज्ञातः, बुध्यतीति बुद्धः, पूजयति महीयते वेति पूजितो महितो वा श्रीहेमचन्द्राचार्यः सिद्धराजनृपतेः । राज्ञामिष्टो मतो वा सूरिमतल्लिका श्रीविजयधर्मसूरीश्वरः । शीलयतीति शीलितः । एवं कर्म-भावप्रयोगेष्वपि वेद्यम् । अत्र षष्ठीविभक्तिस्तु "क्तस्य च वर्तमाने" इति सूत्रेण समागता मन्तव्या । १ भिद्यते स्मेति भिन्नमिति भावे कर्मणि च, कर्तरि तु अभैत्सीदिति भिन्नवान् । २ अद्धातोः स्थाने जग्धुरादेशः स्यात्, उ इत्संज्ञकः, 'तथोर्धः' 'झबे जबाः' इति सूत्राभ्यां जग्धं स्यात् । ३ कॄ विक्षेपे, कीर्णम् । ज्या वयोहानौ, जीर्यते स्मेति जीर्णम् ।

**७१ ल्वाद्योदितश्च ।** ल्वादेरोदितश्च धातोः कितस्तस्य नः स्यात् । लूनः १ । भुग्नः ।

**७२ क्षियो दीर्घः कर्तरि क्तक्तवत्वोर्नत्वं च ।** क्षीणः २। क्षीणवान् ।

**७३ यलसंयोगादेरादन्तात् कितस्तस्य नत्वम्** ३ । द्राणः । ग्लानः ।

**७४ क्वचिद्वा** ४ । त्रातः त्राणः । घ्रातः घ्राणः । ह्रीतः ह्रीणः । वित्तः विन्नः । निर्वातः निर्वाणः ।

**७५ दो दत्ति ।** दा इत्यस्य दथ्, किति ते, न पितः ५ । दत्तः दत्तवान् ।

---

१ लूयते स्मेति लूनः, क्तवतौ तु लुलावेति लूनवान्, एवं धूयते स्मेति धूनः, जीर्यते स्मेति जीनः इति क्र्यादिस्थल्वादेर्निदर्शनानि; **भुजो** कौटिल्ये, भुज्यते स्मेति भुग्नः, **ओहाक्** त्यागे, हीनः, इत्योदिद्धात्वोर्निदर्शने । २ **क्षि** निवास-गत्योः, क्षि क्षये, अक्षैषीदिति क्षीणः क्षीणवान् । क्षीणाशेषनिजप्रतापविसरः संत्रुट्यदाशास्थितिः, इति श्रीहेमचन्द्रसूरिशिष्यतल्लजः श्रीरामचन्द्रसूरिः सत्यहरिश्चन्द्रनाटके। भावे क्षीतम् । ३ यलप्रत्याहारसंयोगाद्याकारान्तधातोरिति भावः । **द्रा** कुत्सायां स्वप्ने वा, द्राणः । स्त्यानः । ४ नुद्-विद्-उन्द्-त्रा-घ्रा-ह्री-निर्वाधातुषु वा नः स्यादिति दिक् । नुद्यते स्मासाविति नुत्तः नुन्नः, उन्दी क्लेदने, उत्तः उन्नः । ५ **दाप्** लवने इत्यादिपकारेद्धातूनां दथ् न स्यादिति

७६ धाञो हिः किति ते। हितम्।

७७ पचो वः। पक्वः पक्ववान्।

७८ शुषेः कः। शुष्कः।

७९ दान्तादयो वा निपात्यन्ते। दान्तः दमितः। पूर्णः पूरितः। तूर्णः त्वरितः। प्यानः पीनः १।

८० फुल्लादयश्च निपात्यन्ते २। फुल्लः। क्षीबः।

८१ क्त-क्तवत्वोरिटि ञिलोपः। पाचितः पाचितवान् ३।

८२ स्थैर्य-गति-भक्षणार्थेभ्योऽधिकरणेऽपि क्तः। हरेरासितं यातं भुक्तं वा ४।

८३ पूर्वकाले क्त्वा।

---

भावः। डुदाञ् दाने 'खसे चपा झसानाम्' दत्तः। पित्धातोस्तु दातः। स्वरान्तादुपसर्गात्तु "स्वरात्तो वा" इति सूत्रेण दा इत्यस्य तकारो वा भवति, तेन प्रत्तः प्रत्तवान्, पक्षे प्रदत्तः प्रदत्तवान्। १ एवं दस्तः दासितः, ज्ञप्तः ज्ञपितः, रुष्टः रुषितः, अम गत्यादौ, आन्तः अमितः, शान्तः शमितः, हृष्टः हृषितः इत्यादीनामपि ग्रहणं कर्तव्यम्। २ 'फुल्लादयश्च' इयन्मात्रमेव क-ख-पुस्तकयोः सूत्रमस्ति। क्षीबः मत्तः इत्यपि पुस्तकद्वये। ३ एवं भावितः भावितवान्, चोरितः चोरितवान्। ४ हरेरितीह "वर्तमानाधारार्थक्तस्य योगे षष्ठी" इति षष्ठीविभक्तिः।

८४ **क्त्वा सेट् किन्न।** वर्तित्वा। शयित्वा। ...

८५ **मुषादिभ्यः क्त्वा कित् १।** मुषित्वा। विदित्वा। गृहीत्वा।

८६ **नोपधात् थ-फान्ताद्वा कित्।** ग्रथित्वा ग्रन्थित्वा। गुफित्वा गुम्फित्वा।

८७ **उदितः क्त्वो वेट्।** भ्रमित्वा भ्रान्त्वा।

८८ **समासे क्यप्।** समासे सति धातोः पूर्वकाले क्यप् २। प्रणम्य ददाति दानम्।

८९ **लघुपूर्वात् णेरय् क्यपि।** परिगणय्य।

९० **आप्नोतेर्वा।** प्रापय्य प्राप्य।

९१ **क्यपीत्वं न ३।** प्रदाय। प्रस्थाय।

९२ **तुम् तदर्थायां भविष्यति।** धातोर्भविष्यति काले

---

१ आदिशब्देन मृड-मृद-गुध-कुष-क्लिश-वद-वस-रुद-विद-ग्रहाणां ग्रहणम्। २ समासश्चेत्तर्हि धातुमात्रात् क्त्वाविषये एव क्यप् प्रत्ययः स्यात्। क्यपि ककारो गुणप्रतिषेधाय, पकारस्तु 'ह्रस्वस्य पिति कृति तुक्' इत्यर्थः। क्त्वा-क्यपौ 'क्त्वाद्यन्तं च' सूत्रेणाव्ययसंज्ञकौ। सम्यग् भूत्वेति संभूय। आ हुत्वेति आहूय। ३ 'दादेरिः' इत्यस्य बाधकमिदम्। निधाय। प्रमायेत्यादि।

तुम् प्रत्ययः स्यात्तदर्थायां क्रियायां प्रयुज्यमानायाम् १ । भोक्तुं व्रजति । पठितुं तिष्ठति ।

९३ **क्वचिन्नाम्न्युपपदेऽपि** । अध्येतुं वेला । भोक्तुं पर्याप्तः । श्रोतुं कुशलः ।

९४ **काम-मनसोस्तुमो मलोपः** । कर्तुकामः । पठितुमनाः ।

९५ **पौनःपौन्ये णम् पदं द्विश्च** । पूर्वकाले धातोः पौनःपौन्ये णम् स्यात् २ । णमन्तं च पदं द्विः । स्मारं स्मारं हसति ।

९६ **कथमादिषु ३ स्वार्थे कृञो णम् द्वित्वाभावश्च** । कथंकारम् । एवंकारम् ।

९७ **घञ् भावे** ४ ।

---

१ तुमन्तमप्यव्ययसंज्ञकं भवति । २ धातुमात्राद् णम् भवति, तदन्तं चाव्ययम् । प्रयोगस्तु—

वेदं वेदं सकलसमयं प्राप्तशान्तस्वभावः ।

स्वर्गस्थोऽसौ विलसति सुखं मद्गुरुर्वृद्धिचन्द्रः ॥

इति महनीयनामानो गुरुदेवश्रीविजयधर्मसूरीन्द्राः । ३ आदिशब्दन्यासाद् अन्यथाकारं इत्थंकारं च वेद्यम् । ४ भवनं भावः । करणं कारः । वदनं वादः । धातुमात्रादेष प्रत्ययः स्यात् । स च नान्यपदाधीनो भवेत्तदा पुँल्लिङ्गे एव स्यात्, उक्तं च स्वकीयलिङ्गानुशासने श्रीहेमचन्द्राचार्यैः—

पुँल्लिङ्गं क-ट-ण-थ-प—भ-म-य-र-ष-स-स्न्वन्तमिमनलौ किश्तिव् ।
न-नङौ घ-घञौ दः किर्भावे खोऽकर्तरि च कः स्याद् ॥ १ ॥

**१०८ क्तिः** । धातोः क्तिः स्यात् १ । मतिः । बुद्धिः । कान्तिः । क्षान्तिः ।

**१०९ हवक्त्योर्नेट्** २ । संशीतिः ।

**११० ग्लादेर्निः** । ग्लानिः । म्लानिः ।

**१११ ॠ-ल्वादिभ्यश्च** ३। कीर्णिः। गीर्णिः। लूनिः। धूनिः।

---

वद्रूपाणि । एवं क्रज्या, समज्या, विद्या, भृत्या, जागर्येत्यादि। अत्र भावार्थकप्रत्ययत्वात् किमपि कर्म नास्ति । प्रोचुश्च श्रीउदयधर्ममुनीन्द्रा वाक्यप्रकाशे—तृतीयान्तो भवेत् कर्ता भावोक्तौ कर्म न भवेदिति । १ धातोः स्त्रियां भावे क्तिः स्यात्, इति क-ख-पुस्तकयोः पाठः । मन्यते मननं वेति मतिः । कमु कान्तौ, क्षमूष् सहने, 'यमान्तस्योपधाया दीर्घः०' कान्तिरिच्छा दीप्तिर्वा, क्षान्तिः क्षमा । प्रयोगमाला पुनरियम्—

धर्मप्रभो ! तुष्यतु सेवकेऽस्मिन्, वृत्तस्य पुष्टिं च बुधस्य जुष्टिम् ।
पापस्य रुष्टिं विकृतेश्च शुष्टिम्, मतश्च तुष्टिं विदधातु धीर ! ॥१॥

इति हिमांशुविजयोऽनेकान्ती । धातुमात्राद् भावी क्तिप्रत्ययः । २ क-ख-पुस्तकयोरस्य सूत्रस्यैतादृशा वृत्तिः—हवप्रत्याहारान्तस्य क्तिप्रत्ययस्य च नेट्। शीङ् स्वप्ने, संशीतिः संशयः । ग्रहादिधातूनामिट् स्यादेव निगृहीतिः । ३ दीर्घॠकारान्त-ल्वादिधातुभ्योऽपि क्तेर्निः स्यादिति भावः । कॄ विक्षेपे 'ॠत इर्' 'य्वोर्वि हसे' 'पुर्नो णोऽनन्ते' इति कीर्णिः ।

**११२ षिद्भिदादिभ्योऽङ्** । षितो धातोर्भिदादेश्च स्त्रियामङ् भावे । पचा १ । मृजा । भिदा । छिदा । क्षिपा । गुहा ।

**११३ गुरोर्हसात्** २ । स्त्रियामङ् । ईहा । ऊहा । [कुण्डा] ।

**११४ प्रत्ययान्ताच्च** ३ । चिकीर्षा । लोलूया । कण्डूया । पुत्रकाम्या ।

**११५ ण्यन्तेभ्यो घटादिभ्यश्च** ४ । स्त्रियां युः । कारणा । घटना । वन्दना । अर्थना ।

---

१ डुपचष् पाके, पच्यते इति पचा । भिद्यते सा भिदा भेदः । एवं मेधा-कृपा-बाधा-क्षपादीनामूह्यम् । जरा-इच्छा-एषणादयस्तु निपातनीयाः । २ हसान्तात्, इति क-पुस्तके । ख-पुस्तकेऽस्य वृत्तौ—गुरुमतो हसान्तात्, इति विशेषः । ईह चेष्टायाम्, ईह्यते इति ईहा । श्रीचन्द्रकीर्तिसूरयस्तु ईह वाञ्छायामिति प्रोचुः। कुडि दाहे, एवं ईक्षा-श्रद्धा-लेखादयः । ३ इच्छाऽतिशयाद्यर्थेषु ये स-यङादिप्रत्ययास्तदन्ताद्धातोरपि स्त्रियामङ् स्यादिति तात्पर्यम् । डुकृञ् करणे, सान्तादङि चिकीर्षा । लूञ् छेदने, यङन्ताद् लोलूयते इति लोलूया, अङि परे 'यतः' इत्यलोपः । कण्डूञ् गात्रविघर्षणे । पुत्रकाम्यते इति पुत्रकाम्या । ४ आदिशब्दाद् आस-अर्थ-श्रन्थ-वन्द-विद-इष-ग्रन्थानां ग्रहणम् । घट इति स्थाने घट्ट इति लिखितं पण्डितरामाश्रमेण, तदपि नानुचितम्, भट्टचट्टघट्टना इति रत्नप्रभसूरिकृतायां रत्नाकरावतारिकायां प्रयोगसत्त्वात् । कार्यते इति कारणा 'युवोरनाकौ' ।

११६ तव्यानीयौ १ । धातोरेतौ स्तो भाव-कार्ययोः । आसितव्यम् । करणीयम् ।

११७ वसेस्तव्यः कर्तरि णिच्च । वसतीति वास्तव्यः ।

११८ स्वराद्यः । चेयम् । जेयम् । तव्यानीयावपि । चेतव्यः । चयनीयः ।

११९ ई चातः । आत ईः स्याद्ये । देयम् । [ धेयम् ]। गेयम् । पेयम् । हेयम् । [ स्थेयम् ] ।

१२० पु-शकात् २ । पवर्गान्ताच्छकादेश्च यः स्यात् । शप्यम् । शक्यम् । सह्यम् ।

१२१ ऋ-हसान्ताद् घ्यण् । ऋ-हसान्ताद् ३ घ्यण् भाव-कार्ययोः । कार्यम् । हार्यम् । वाक्यम् । घात्यम् ।

---

१ एतत्प्रत्ययद्वयान्ताः शब्दा वाच्यलिङ्गा भवन्ति, यथा— श्रीविजयधर्मसूरीयप्रमाणपरिभाषाऽऽख्यो ग्रन्थः पठितव्यः पठनीयो वा, प्रबुद्धरौहिणेयनाटकं पठितव्यं पठनीयं वा, तिलकमञ्जरी परिशीलितव्या परिशीलनीया वा । २ शक-सह-गद-मद-चर-यम-तक-शस-चत-यत-पत-जन-हन-शल-रुच इत्येते शकादयः । शप्यमिति पवर्गान्तनिर्देशः । ३ ऋवर्णान्ताद् हसान्ताच्च, इति प्रतिद्वये पाठः । हसान्तेन व्यञ्जनान्तमात्रगृहीतिः । उच्यते इति वाक्यं 'च-जोः क-गौ घिति' इति चस्य कत्वम् । हन् हिंसा-गत्योः, 'हनो घत्' घात्यम् ।

१२२ घ्यणि क्वचित्कुत्वाभावः । पाच्यम् । वाच्यम् ।

१२३ ऋदुपधात् क्यप् । कृत्यम् । वृत्यम् ।

१२४ कृपि-चृत्योर्न १ । कल्प्यम । चर्त्यम् ।

१२५ मृजो वा । मृज्यं मार्ग्यम् २ ।

१२६ इणादिभ्यश्च ३ । इत्यः । स्तुत्यः ।

१२७ [ खन इत्वं क्यपि । खेयम् ] ।

१२८ शासेरिः । शिष्यः ।

१२९ कृ-वृषोर्वा क्यप् । कृत्यं कार्यम् । वृष्यं वर्ष्यम् ।

१३० पुष्य-सिध्यौ संज्ञायाम् । पुष्यः ४ । सिध्यः ।

१३१ तव्यादयोऽर्हेऽर्थे विधौ शक्तौ च ५ । द्रष्टव्यः, दर्शनीयः । अध्येतव्यः, अध्ययनीयः, अध्येयः । वोढव्यः ।

---

१ कृपेर्न । कल्प्यम्, इति पुस्तकान्तरे पाठः । २ क्यपोऽभावे 'ऋ-हसान्ताद् घ्यण्' 'मृजेर्वृद्धिः' 'च-जोः क-गौ घिति' इति जस्य गत्वे मार्ग्यम् । ३ इण्-स्तु-वृ-दृ-भृ-शास-जुष-खनेभ्यः क्यप् । स्तूयते इति स्तुत्यः । डुभृञ् धारण-पोषणयोः, भ्रियते इति भृत्यो दासः । ४ पुष्य-सिध्याभिधानं नक्षत्रद्वयम् । ५ तव्य-अनीय-य-क्यप्-घ्यणस्तव्यादयः पञ्च, ते सर्वेऽर्हादिषु यथाप्रयोगं भवन्ति । अर्हे योग्यम् । द्रष्टुं योग्यः समर्थो वेति द्रष्टव्यः 'रारो ङसे०' इति रत्वम् । एवं दर्शनीयः । क्यपि दृश्य इत्यादि । यप्रत्ययस्तु स्वरा-

12

१३२ तव्यादीनां कृत्यसंज्ञा १ ।

१३३ [ इञ् अजादिभ्यः । आजिः । आतिः ] ।

इति कृत्प्रक्रिया ।

---

## अथोणादयः २ ।

१३४ कृादेरुण् ३ । कारुः । दारु । चारु । चाटु । वायुः । स्वादु । साध्नोति स्व-परकार्याणीति साधुः ।

---

न्ताद्धातोः स्याद्, अध्येतुं योग्यः समर्थो वेति अध्येतव्यः, अध्येयः । स्तुत्यः । नुत्यः । यथा चोक्तमनेकान्तिना—

कार्यो यत्नः सता नित्यं ज्ञानशक्तेः प्रवर्द्धने ।
स्तव्यो भावाज्जिनेन्द्रश्च गुरुः सेव्यो महाव्रती ॥१॥

१ कृत्याः क्त-खलर्थाश्च प्रत्यया भाव-कर्मणोर्भवन्ति, भणितवन्तश्च श्रीउदयधर्ममुनयो **वाक्यप्रकाशे**—

कर्मणि साप्याद्धातोरकर्मकादात्मनेपदं भावे ।
कृत्य-क्त-खलर्थयुतम्, क्त्वा-तुममाद्याः पुनर्भावे ॥ २८ ॥

साप्याद्धातोर्नाम सकर्मकधातोः । “ कृत्यानां कर्तरि वा षष्ठी ” इति षष्ठी, पक्षे तृतीया, तव त्वया वा पठितव्यः पठनीयः पाठ्यो वा स्याद्वादरत्नाकरः ।

२ आदिशब्देन उ-तु-क्नादयो ग्राह्याः । ३ णित्त्वाद् वृद्धिः ।

१३५ तनादेरुः । [ तनोतीति ] तनुः १ । तरुः । त्सरुः । कटुः । वसतीति वसुः । मनुः । [ हन्तीति ] हनुः ।

१३६ मध्वादयो निपात्याः । मधु २ । सिन्धुः । [ इन्दतीति ] इन्दुः । शिशुः । [ बिन्दतीति ] बिन्दुः । इच्छुः ।

---

उणादयः सर्वेषु भूत-भविष्यद्वर्तमानेषु कालेषु भवन्ति, यथा— चकार करिष्यति करोति वेति कारुः शिल्पी । दॄ विदारणे, दारु काष्ठम् । चर गतौ, 'अत उपधायाः' चरतीति चारु मनोहरम्, विशेषणत्वाद् विशेष्यलिङ्गानुसारेण त्रिषु लिङ्गेषु प्रयुज्यते, एवमन्यत्रापि । चट भेदने, चाटु प्रियभाषणम् । वा गत्यादौ, वातीति वायुः । पातीति पायुर्गुदा । स्वद आस्वादने, स्वदते इति स्वादु मधुरमिष्टञ्च । १ तनु विस्तारे, तनुः काया । तरन्त्यनेनापदमिति तरुर्वृक्षः । त्सर छद्मगतौ, त्सरुरसेर्मुष्टिः । कटे वृष्ट्यादौ, कटति जिह्वामिति कटुः रसविशेषः । वसुरग्न्यादिः । हन हिंसागत्योः, हनुः । मन ज्ञाने, मनुर्मन्त्रः । एवमाशु-जरायुप्रभृतीनामपि स्वयमूह्यम् । २ मन ज्ञाने, मन्यते इति मधु मद्यं पुष्परसश्च । स्यन्दू प्रस्रवणे, स्यन्दते इति सिन्धुः, निपातनात् संप्रसारणधकारौ, देशे नदविशेषेऽब्धौ सिन्धुरित्यमरः । शो तनूकरणे, श्यतीति शिशुर्बालः । बिदि अवयवे, 'इदितो नुम्' बिन्दतीति बिन्दुः । बिन्दुः स्याद्दन्तदशाने शुक्रे वेदितृ-विप्रुषोरिति विश्वलोचने । इषु इच्छायाम्, इच्छुः ।

१३७ **इष्णुः स्नुः क्नुः शीले १।** [अलङ्करोति तच्छीलः] अलङ्करिष्णुः ।

१३८ **जि-भुवोर्नेडू-गुणौ स्नौ ।** जिष्णुः २ । भूष्णुः । क्षिप्नुः ३ ।

१३९ **षाकोकुणः ।** शीलेऽर्थे षाक-उ-उकण्प्रत्ययाः स्युः ४ । वराकः । आशंसुः ५ । स्थायुकः ६ । भावुकः ।

---

१ अतः प्रभृति ग्रन्थसमाप्तिपर्यन्तं यानि सूत्राणि, तदर्थानि सर्वाणि कृदन्ते निहितानि **पाणिनि–हेमचन्द्रा**दिवैयाकरणैः, **चन्द्रिकाकृता**ऽपि तथैव कृतम्, न केनाप्येषामुणादिषु पाठः कृतः । अलंकृञ्-निराकृञ् प्रजन्-उत्पच्-उत्पत्-उत्पद्-प्रसू-उन्मद्-रुच्--अपत्रप्-वृत्-वृध्--सह्-चर्-भू-भ्राज्धातुभ्यो ण्यन्तधातुभ्यश्च पर इष्णुप्रत्ययः । निराकरिष्णुः शत्रुं तेजःपालः । ग्ला-जि-स्था-भू-म्ला-क्षि-पच्-यज्-परिमृज् इत्येतेभ्यः स्नुः स्यात् । ग्लास्नुः। २ 'क्ङिन्त्यात्॰' 'षुर्नो णोऽनन्ते' जिष्णुः, भूष्णुः । ३ विष्-त्रस्-गृध्-क्षिप्-धृष् इत्येतेभ्यः क्नुः प्रत्ययः, कित्त्वाद् गुणाभावः। **विष्लृ** व्याप्तौ, वेवेष्टुं शीलमस्य स विष्णुः । क्षेप्तुं शीलमस्येति क्षिप्नुः इत्यादि । ४ जल्प्-भिक्ष्-कुट्ट्-लुण्ट्-वृ इत्यादिभ्यः षाकः प्रत्ययः स्यात् । **वृङ्** संभक्तौ, **वृञ्** संवरणे, इत्येतयोर्वराकः, षित्त्वात् स्त्रियां 'षृन्नितः' सूत्रादीप् स्यात्, वराकी । एव जल्पाकः, जल्पाकी इत्यादि । ५ आशंसते इति आशंसुरिच्छुः । एवं भिक्षुः । ६ लष्-रत्-भिक्ष्-पद्-स्था-भू-वृष्-हन्-कम्-गम्-शृ इत्यादिभ्य उकण्

१४० सान्तेभ्य उः १। चिकीर्षुः। तितीर्षुः।

१४१ शमादिभ्यो घिनुण् २। शमी। संपर्की। रागी। विवेकी।

१४२ यङ ऊकः। यज-जप-दंश-वदेभ्यो यङन्तेभ्य ऊकः स्याच्छीले।

१४३ लुक्। ऊके सति यङो लुक् स्यात्। यायजूकः ३। दंदशूकः। वावदूकः।

१४४ इण्-नश्-जि-सर्तिभ्यः क्वरप्। इत्वरः ४। नश्वरः। जित्वरः। सृत्वरः।

---

भवेत्। स्थातुं शीलमस्य स स्थायुकः 'आतो युक्'। एवं लाषुकः, भिक्षुकः, गामुकः, घातुकः इत्यादि। १ इच्छाऽर्थे, न तु शीले। कर्तुमिच्छतीति चिकीर्षुर्ग्रन्थम्, तरीतुमिच्छतीति तितीर्षुः समुद्रम्, कारकसूत्रे क्तादिवर्जितत्वान्न षष्ठी। २ शीलेऽर्थे। शाम्यतीत्येवंशीलः शमी, णित्त्वेन वृद्धेः प्राप्तावपि 'मान्तस्य सेटो न वृद्धिः०' सूत्राद् वृद्धेरभावः। पृच संपर्के, घित्त्वात् 'च-जोः कु-गौ घिति' इति चस्य कत्वे संपर्की। रञ्ज रागे, विचिर् पृथग्भावे। ३ यज पूजादौ, यङि कृते सति यङ्लुकि यायज्यते इति यायजूकः। यङ्लुकि 'वाऽन्यत्र' अनेन विकल्पेन लुग् भवति, ऊके सति तु यङो नित्यं लुग् भवतीत्यर्थः। दंदश्यते इति दंदशूकः सर्पः। ४ एतीति इत्वरः पित्त्वात्तुक्, स्त्रियां टित्त्वादीप्, इत्वरी। नश्यती-

**१४५ इक्-श्तिपौ धातुनिर्देशे** १ । पचिः । वचिः । पचतिः । वक्तिः ।

**१४६ वर्णात् कारः** २ । अकारः । हकारः ।

**१४७ रादिफो वा** । रेफः, रकारः । इत्युणादयोऽपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्या निपात्याश्च ।

**१४८ लोकाच्छेषस्य सिद्धिः** ३ । इत्युणादयः ।

## इति कृत्प्रक्रिया ।

**इति ४ श्रीसागरेन्दुपद्मप्रसादेन जिनेन्दुना ५ सम्यक् । सिद्धान्तरत्निकाऽऽख्यं कृतं शब्दानुशासनम् ॥ १ ॥**

---

त्येवंशीलो नश्वरो नशनशीलः । **जि** जये, **सृ** गतौ । **गम्लृ** गतौ, निपातनाद् गत्वरः । १ शित्त्वात् चतुर्वत् कार्यं प्रायेण भवति । धातोः कथनं धातुनिर्देशः, यथा-दिहि-दुहि-मिहि इत्यत्र दिहादीनां निर्देशार्थमिक्, ' गुणोऽर्ति-संयोगाद्योः ' इत्यत्र श्तिप्प्रत्ययः । २ स्वर-व्यञ्जनरूपवर्णमात्रात् कारप्रत्ययो भवति, यथा—ओकारः, ककारः, यकारः इत्यादि । ३ " स्पृहि-गृहि-पत्यादेरालुः " " निन्दादेर्वुञ् " " चङ्क्रमार्थादेर्युः " " सृ-घस्यद्भ्यः क्मरः " " भञ्ज-भास-मिद्भ्यो घुरः " " नमादेरः " इत्यादिकानां लोकाद् व्याकरणान्तरात् सिद्धिर्ज्ञातव्या । ४ अत्र 'इति' शब्दः क-पुस्तके न दृश्यते । ५ जिनचन्द्रेण कर्त्रा ।

प्रयुक्ताः प्रायशः प्राज्ञैर्ये च योगार्थबोधकाः १ ।
शब्दाश्च संग्रहस्तेषामनन्तः शब्दवारिधिः ॥ २ ॥

इति श्रीजिनचन्द्रसूरिणा प्रणीते सिद्धा-
न्तरत्ने शब्दानुशासने कृदन्तवृत्तिः
परिपूर्त्तिमगात् । कल्याणमस्तु
सततम् ।

---

१ योगोऽन्वयः स तु गुण-क्रियासम्बन्धसम्भव इति हैमः ।

प्राप्य श्रेष्ठगुणैर्गरिष्ठयशसः प्रौढां प्रसत्तिं गुरोः,
छात्राणां हितकाम्यया परमया सज्ज्ञानलब्धेर्धिया ।
संक्षेपेण च भाषया सरलया सिद्धान्तरत्ने मया,
लब्धं टिप्पणकं सदा विजयतां सिद्धान्तमुक्ताभिधम् ॥ १ ॥

श्रीधर्मसूरेः पदपङ्कजाभ्यां शिवादिपुर्यां सुपवित्रितायाम् ।
संपूरितं टिप्पणकं सुमासे नभोऽभिधे पञ्चमके तिथौ च ॥ २ ॥

इति श्रीसिद्धान्तरत्ने आख्यातादिवृत्तिद्वये सिद्धान्तमुक्ता-नामकमिदं सरलार्थकं जगत्पूज्य-शास्त्रविशारद-जैनाचार्य-श्रीविजय-धर्मसूरीश्वरलघुविनेयेन मुनिजयन्तविजयेन रचितमिदं टिप्पणकम्, इन्द्रिय-दिग्गज-निधि-भूमि-(१९८५)प्रमिते वैक्रमे संवत्सरे, सप्तमे धर्मसंवत्सरे श्रावणशुक्लपञ्चम्यां तिथ्यां शिवपुरीनगर्यां संपूर्णतां प्राप्तमिति शम् ॥

शिषिं पिषिं शुष्यति-पुष्यती त्विषिं विषिं श्लिषिं तुष्यति-दुष्यती
द्विषिम् ।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा ॥८॥

तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यति-दृप्यती सृपिम् ।
स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् गणितांस्त्रयोदश॥९॥

अदिं हदिं स्कन्दि-भिदि-च्छिदि-क्षुदीन् शदिं सदिं स्विद्यति-पद्यती
खिदिम्
नुदिं तुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान् दश-पञ्च चानिटः
॥१०॥

पचिं वचिं विचि-रिचि-रञ्जि-पृच्छती न्निजिं सिचिं मुचि-भजि-भञ्जि-
भृज्जतीन् ।
त्यजिं यजिं युजि-रुजि-सञ्जि-मज्जतीन् भुजिं स्वजिं सृजि-विजी
विद्ध्यनिट्स्वरान् ॥ ११ ॥

इत्यनिट्कारिका ।



## सङ्ग्रहश्लोकाः ।



तृतीयान्तो भवेत्कर्ता, भावोक्तौ कर्म नो भवेत् ।
अन्यार्थस्याद्यवचनं, क्रियायामात्मनेपदम् ॥ १ ॥

यत्र कर्मैव कर्तृत्वं, याति कर्ता तु नोच्यते ।
त्रिक्यात्मनेपदं धातोरुक्तिः सा कर्मकर्तरि ॥ २ ॥

सर्वस्मिन् कारकेऽनुक्ते, यथार्हं सूत्रभाषिताः ।
विभक्तयो द्वितीयाद्याः, उक्ते तु प्रथमा भवेत् ॥ ३ ॥

उक्तं कृत्तद्धित-त्यादि-समासैः कारकादिकम् ।
तद्विभक्त्यप्रयोगत्वात्, प्रथमा नाममात्रतः ॥ ४ ॥

शत्रानश्-शानाऽतृश्-क्सु-कान-क्तवतु-णक-तृचस्तृन् च ।
कर्तर्येते क्तोऽपि च, गत्यर्थाकर्मकादिभ्यः ॥ ५ ॥

शत्रानशौ वर्तमाने, स-स्यौ चैतौ भविष्यति ।
क्सु-कानौ परोक्षावत्, साध्यौ काले परोक्षके ॥ ६ ॥

शोभते विनयं कुर्वन्, ददानो दानमास्तिकः ।
दिवं यास्यन् शिवं गास्यमानो वा संयमं श्रयेत् ॥ ७ ॥

तद्व्याप्यं यद्विभक्त्याद्यं, तदाऽऽनश्यपि तद्यथा ।
विनयः क्रियमाणोऽस्ति, दीयमाने धने बुधैः ॥ ८ ॥

शानातृशौ वर्तमाने, शृण्वानोऽर्थमघं द्विषन् ।
तीते क्त-क्तवतू तीर्थं गतः पूजितवान् जिनम् ॥ ९ ॥
शुद्धाऽशुद्धा क्रिया द्वेधा, शुद्धा त्याद्यन्तधातुजा ।
अशुद्धा कृत्प्रत्ययान्ता, ते तु शत्रानशादयः ॥ १० ॥
त्रिधा धातुरकर्मा च, द्विकर्मा चैककर्मकः ।
तत्राऽकर्मा द्विधा नित्याऽकर्माऽविवक्षिताप्यकः ॥ ११ ॥
स नित्याकर्मको यस्य, कर्म नैवास्ति मूलतः ।
लज्जते विद्यते तिष्ठत्येष जागर्ति वर्धते ॥ १२ ॥
विवक्षितं न यत्कर्म, सोऽविवक्षितकर्मकः ।
यथा करोत्यधीतेऽसौ, क्रियतेऽधीयतेऽमुना ॥ १३ ॥
उपसर्गाद् विपर्यस्येत्, सकर्माऽकर्मता क्वचित् ।
यथोद्गच्छति मार्तण्डः, पराभवति तामसान् ॥ १४ ॥
सोपसर्गोऽन्यार्थे वृत्ति-रन्तर्भूतः क्रियान्तरः ।
णिगन्तोऽन्तर्णिगर्थो वा, पञ्चोपायैः सकर्मकः ॥ १५ ॥
धातोरर्थपरावर्तोऽप्युपसर्गात् क्वचिद्भवेत् ।
विहाराहार-नीहार-प्रतीहार-प्रहारवत् ॥ १६ ॥
उभयोः कर्मणोर्न्यादेः, प्रधानेतरता यथा ।
आरभ्यते क्रिया यस्मै तद् दुग्धाद्यं प्रधानकम् ॥ १७ ॥
तत्सिद्ध्यै क्रियया यत्तु, व्याप्यते यद् गवादिकम् ।
तदप्रधानं गौणाख्यं, गोपालो दोग्धि गां पयः ॥ १८ ॥

यदा पयोऽर्थी कर्त्रादेः प्रवृत्तिरविवक्षिता ।
तदा मुख्याऽसंनिधानाद् गवादेरेव मुख्यता ॥ १९ ॥

गत्यर्थाऽकर्मकाण्यन्ताः, कर्तृकर्मोक्तिताजुषः ।
चैत्रेण गम्यते मैत्रो ग्रामं मासमथास्यते ॥ २० ॥

बोधाऽऽहारार्थ–शब्दाऽऽप्यधातौ ण्यन्ते द्वयोक्तता ।
यथार्थं बोध्यते शिष्यो गुरुणाऽर्थोऽथ शिष्यकम् ॥ २१ ॥

द्वैकर्म्यहेतुरहिते, णिगन्तधातौ द्विकर्तृता तत्र ।
उक्तः प्रयोजकः स्यात्, कर्ताऽनुक्तः प्रयोज्यस्तु ॥ २२ ॥

गणजा नामजाः सौत्रा धातवस्त्रिविधाः स्मृताः ।
भ्वाद्यादिनवकोक्ता ये, गणजास्ते प्रकीर्तिताः ॥ २३ ॥

काम्य-क्यन्-णिज्-युतान्तानि, क्विप्-क्यङ्ङन्तानि यानि च ।
तानि नामानि धातुत्वं यान्ति ते नामधातवः ॥ २४ ॥

सौत्राः कण्ड्वादयोऽन्दोलण्-प्रेङ्खोलणप्रमुखा अपि ।
आत्मोभय-परपदादथवा धातवस्त्रिधा ॥ २५ ॥

दशानामपि पूर्वाणि, वचनानि नवैव हि ।
परस्मैपदसंज्ञानि, प्रत्ययौ च शतृ-क्वसू ॥ २६ ॥

वचनानि नवान्त्यानि, कानाऽऽनशौ च प्रत्ययौ ।
आत्मनेपदमेते च, योज्यते धात्वपेक्षया ॥ २७ ॥

तदस्यास्तीति मत्वर्थस्तत्र स्यात् सर्वतो मतुः ।
धनवान् बुद्धिमान् धीमानदन्तादिन् धनी गुणी ॥ २८ ॥

द्वि-त्रेस्तीयः, चतुःषड्भ्यां थट्, नान्तान्मट् दशावधि ।
एकादशादेर्डः, चैकोनविंशत्यादितस्तमट् ॥ २९ ॥

सर्वेभ्यस्त्व-तलौ ष्यण् च, कापीमन् भाववाचकाः ।
शुक्लत्वं शुक्लता शौक्ल्यं, शुक्लिमा शुक्लभाववत् ॥ ३० ॥

प्रमाणे द्वयसट् दघ्नट्, मात्रट् च प्रकृते मयट् ।
कल्पप् देश्यप् च देशीयर् किञ्चिदूने विशेषणात् ॥ ३१ ॥

संहितैकपदे नित्या नित्या धातूपसर्गयोः ।
नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ॥ ३२ ॥

अविकारोऽद्रवं मूर्तं प्राणिस्थं स्वांगमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ ३३ ॥

आकृतिग्रहणाज्जातिर्लिंगानां न च सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ ३४ ॥

इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपम् ।
अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात् ॥ ३५ ॥

उपसर्गेण धात्वर्थो बलादन्यत्र नीयते ।
विहाराऽऽहार-संहार-प्रहार-प्रतिहारवत् ॥ ३६ ॥

धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते ।
तमेव विशिनष्ट्यन्योऽनर्थकोऽन्यः प्रयुज्यते ॥ ३७ ॥

निपाताश्चोपसर्गाश्च धातवश्चेत्यमी त्रयः ।
अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम् ॥ ३८ ॥

भ्वादिर्ह्वादिरदादिश्च दिव-स्वादि-रुधादिकाः ।
तनादिश्च तुदादिश्च क्र्यादि-चौरादिकौ गणाः ॥ ३९ ॥

समासाः षड्विधाः सन्ति संक्षेपाय हि हेतवे ।
प्रथमोऽव्ययीभावोऽथ द्वन्द्वो द्वितीय उच्यते ॥ ४० ॥

तत्पुरुषस्तृतीयः स्याच्चतुर्थः समाहृतो द्विगुः ।
पञ्चमस्तु बहुव्रीहिः षष्ठश्च कर्मधारयः ॥ ४१ ॥ ( युग्मम् )

पूर्वोऽव्ययोऽव्ययीभावो द्वन्द्वश्चकारकैर्युतः ।
द्वितीयादिविभक्त्यन्तपदपूर्वो तृतीयकः ॥ ४२ ॥

संख्या पूर्वे हि यस्यास्ति स एकत्वे द्विगुर्मतः ।
समस्तान्यपदमुख्यः×पञ्चमो,ऽन्त्यः* समार्थके॥४३॥(युग्मम्)

वाणीप्रयोगरूपो हि व्यवहारोऽत्र दृश्यते ।
तस्माद् वाणीप्रयोगस्य साधि व्याकरणं पठेत् ॥ ४४ ॥ *



× बहुव्रीहिः । * कर्मधारयस्तुल्यार्थे ।

* आदित एकत्रिंशत्सङ्ख्यापर्यन्तश्लोका जैनाचार्य-श्रीउदयधर्ममुनिविरचितवाक्यप्रकाशग्रन्थत उद्धृताः सन्ति । अन्त्याश्च षट् श्लोका मुनिहिमांशुविजयविरचिताः सन्ति ।

**एतद्व्याकरणस्थानां कतिपयप्रयोगाणां सिद्धावुपयोगीनि कानिचित् सूत्राण्यत्र न दृश्यन्ते यथा व्यञ्जनसन्धौ—**



१ हसात् परस्य झसस्य लोपो वा सवर्णे झसे। भवान् छूरः भवाञ्च् छूरः।

स्वरान्तस्त्रीलिङ्गे—

२ (अडागमाभाव आमोऽप्यभावः) बुद्धौ, बुध्याम्।

हसान्तपुंलिङ्गे—

३ शसे वा। विसर्जनीयस्य शषसे परे वा सकारो भवति। दोष्षु, दोःषु। कश्शेते, कः शेते।

युष्मदस्मत्प्रक्रियायाम्—

४ युष्मदस्मदोः शसो नो वक्तव्यः। युष्मान्, अस्मान्।

स्त्रीप्रत्यये—

५ हसात् तद्धितयस्येपि लोपः। मनुषी, मत्सी।

तद्धिते—

६ मातृ-पितृभ्यां स्वसुः सस्य षः। पैतृष्वस्रीयः, मातृष्वस्रीयः।

७ ईदग्नेः सोम-वरुणयोः।

८ अग्न्यादेः सोमादीनां सस्य षः। अग्नीषोमीयम्।

९ अग्नेरिद् वृद्धौ। आग्निमारुतम्। आग्निवारुणम्।

१० एतत्-किम्-इदम्-यत्-तद्भ्यः परिमाणे वतुः। यावान्। तावान्। एतावान्। इयान्। कियान्।

११ त्रेः त्रयस्। त्रयोदशः।

१२ षष उत्वं दत्-दश-धासूत्तरपदादेश्च ष्टुत्वम्। षोडश। षोढा।

---

# सिद्धान्तरत्निकास्थसूत्राणामकाराद्यनुक्रमणिका ।

| सूत्राणि. | पृष्ठे. |
|---|---|

"त"

14

# सारस्वत-चन्द्रिकात उद्धृत्य टिप्पणके संप्रयुक्तानि कानिचित् सूत्राणि.



# शोधनपत्रम्.



| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| ऌृवर्णस्य | ऌृवर्णस्य | २ | ४ |
| सर्वस्य | सर्वस्य । | ६ | २ |
| ञभे | ञभे | ,, | ११ |
| मद्ध्वत्र | मद्ध्वत्र | ,, | १६ |
| पित्रर्थः | [ पित्रर्थः ], पित्रर्थः | ,, | १७ |
| ऌृणाम- | ऌृणाम- | ८ | ६ |
| कतृ | कर्तृ | ,, | ७ |
| चपात् | [पदान्ते वर्तमानात्] चपात् | ९ | ,, |
| चुत्वं | चुत्वं | ,, | १६ |
| स्तोः ष्टुर्न | तोः टुर्न | ,, | १८ |
| प्रत्यङ्ङिदम् | प्रत्यङ्ङिदम् | १० | १० |
| षट्त् सन्तः | षट् त्सन्तः [षट् सन्तः] | ,, | १७ |
| संयता, सँय्यता । | संयन्ता, सँय्यन्ता । | ११ | १२ |
| लोप. | लोपः | १२ | १० |
| ' जसि ' | ' जसी ' | १४ | ,, |

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| नन्ते | -ऽनन्ते | १६ | ९ |
| व्यवधानेऽपि | र्व्यवधानेऽपि | ,, | १२ |
| —कर- | -क्र-हन्- | २० | ४ |
| न इति | न । | २३ | १० |
| भ्रशब्दस्य | भ्रूशब्दस्य | २४ | १ |
| श्तुभवति | श्तुर्भवति | २५ | १२ |
| स्याद्दौ । | स्यादौ । श्रीपम्, | ,, | १६ |
| टाऽऽद्दौ | उक्तपुंस्कं टाऽऽद्दौ | २६ | १४ |
| धातणि | धातॄणि | ,, | २० |
| अतिनवा | अतिनावा | २७ | ६ |
| ध्रुट्सु | ध्रुट्त्सु | २८ | १६ |
| -रसंयोगे पदान्तेच । | -रयोर्हसपरयोः । | ३० | ,, |
| वा सु । | वाऽऽसु । | ३२ | २ |
| सुपक्षु ॥ | सुपक्षु ॥ वृक्षवृश्च्शब्दः, | ३२ | १५ |
| सस्य | शस्य | ,, | १६ |
| दोषसु, दोःसु | दोषसु | ३४ | ४ |
| दोष्षु । | दोःषु, दोष्षु । | ,, | ५ |
| आशीःषु । | आशीष्षु, आशीःषु । | ३६ | १० |
| वा' | वा' हे कर्म हे कर्मन् । | ३७ | ४ |

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| पादादौ | पादादौ च | ३९ | १५ |
| अयो | अथो | ४० | ४ |
| सह । | सहसा | ,, | ६ |
| प्रयस् | प्रायस् | ,, | ,, |
| िरुक | हिरुक् | ,, | ७ |
| प्रादिकः उपसर्गा । | प्रादिका उपसर्गाः । | ४० | १५ |
| —पश्चात् | —पश्चाददन्तात् | ४३ | ३ |
| वोर्गुणात् । | वौर्गुणात् | ४३ | ५ |
| चा व् | चाव् | ४४ | ७ |
| अग्निषोमीयम् | अग्नीषोमीयम् | ४५ | ५ |
| गार्गीयः । | ० | ,, | १६ |
| इन्द्रियः | इन्द्रियम् | ,, | १७ |
| —राम् । | —राम् द्रव्यप्रकर्षे । | ४८ | ९ |
| दघ्न-द्वयस्-मात्राः । | दघ्नट्-द्वयसट्-मात्रटः । | ,, | १२ |
| नमआदि— | नम आदि— | ५१ | १७ |
| —क्तवत्— | —क्तवतु— | ५३ | १ |
| ० | अनत इति किम्? उपकुम्भात् । | ५४ | १८ |
| उपकुम्मात् । | ० | ५५ | २ |
| अग्नि-मारुतौ । | अग्ना-मारुतौ । | ५६ | १३ |
| सङ्ख्यापूव- | सङ्ख्यापूर्व- | ५७ | ७ |

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| -सङ्ख्या- | -सङ्ख्या- | ५७ | १३ |
| कु — | कुक्कुट- | ५९ | १ |
| आमहैप । | आमहैप् । | ६३ | ३ |
| ई वहि महि । | इ वहि महि । | ,, | ९ |
| उच्चारणाथः । | उच्चारणार्थः । | ,, | १२ |
| -मुक्ताथ- | -मुक्तार्थ- | ,, | १९ |
| बभव बभवतुः | बभूव बभूवतुः | ६४ | १० |
| भयासम् | भूयासम् | ,, | २० |
| ममन्यतुः । | ममन्थतुः । | ६७ | १ |
| अजैषीत । | अजैषीत् । | ६९ | १८ |
| -मजि- | -मजि- | ७० | १० |
| शाकः । | शाकिः । | ,, | १४ |
| विषि- | पुषि-विषि- | ,, | १८ |
| " ग्वोर्विहसे " | ० | ७१ | २ |
| भ्रास- | भ्राश- | ,, | १५ |
| अयसीत् । | अयंसीत् । | ७२ | ३ |
| जगन्थ । | जगमिथ जगन्थ । | ,, | ७ |
| स्यप. | स्यपः | ७२ | ८ |
| आदन्तात | आदन्ताद् | ७३ | ,, |
| शा-च्छा- | शा-छा- | ,, | १९ |

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| सेरपवाद । | सेरपवादः । | ७४ | १९ |
| सुस्त्रविथ | ० | ,, | २१ |
| शुश्रविथ | ० | ७५ | ४ |
| चस्कन्ये। चस्कन्ता। | चस्कन्थ २ । स्कन्ता। | ,, | १० |
| ग्र दीनामिटो दीर्घः, | ग्रहादीनामिटो दीर्घः१ । | ,, | १९ |
| ससङ्क्थ । | ससञ्जिथ ससङ्क्थ । | ७६ | २ |
| -चक्रे । | -चकार । | ,, | ७ |
| अश्च्योतित् | अश्च्योतीत् | ७७ | १९ |
| एधिषीध्वं | ० | ७९ | ९ |
| ऐधीष्ट | ऐधिष्ट | ,, | १० |
| युधिर् | बुधिर् | ८४ | ३ |
| बभजुः | ० | ,, | १४ |
| माजन्ति | मार्जन्ति | ८७ | ,, |
| स्यात । | स्यात् । | ,, | १९ |
| न | न । | ९० | १८ |
| ईर | ईर् | ९१ | ३ |
| तुष्टविथ | ० | ९२ | १६ |
| पृ॒ | पृ॒ पृ | ९४ | १९ |
| पूर्वस्यात् | पूर्वस्यात | ९५ | ८ |
| अघात | अघात् | ९६ | १८ |

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| ' इरितो वा ङः ' | ' इरितो वा ङः ' | ९८ | १३ |
| सूत–सूयति० ' | सूति–सूयति० ' | १०० | १७ |
| चात्व । | चात्वम् । | १०१ | २ |
| विहायसां | विहायसा | ,, | ३ |
| अशिनट्-ङ । | अशिनट्-ङ् । | १०६ | १७ |
| ऋषि | ऋषी | ११० | ७ |
| पालनार्थ | पालनार्थ- | ११२ | १८ |
| ववृध्र्वे । | ववृद्ध्वे । | ११५ | १६ |
| अङ् सयोः । | अङ्-सयोः । | ११८ | ७ |
| उपधाया.' आदीनि | उपधायाः' इत्यादीनि | ,, | १५ |
| अबीभवम । | अबीभवम् । | ,, | १६ |
| -स्बन- | -स्वन- | ११९ | १९ |
| -जृष- | -जृष- | १२० | ८ |
| अचीचिमत् | अचीचमत् | ,, | १४ |
| म्वरस्य | स्वरस्य | १२३ | १६ |
| बोमुज्यते । | बोभुज्यते । | १२५ | ६ |
| अबोमुवुः । | अबोभूवुः । | १२८ | १८ |
| नित्यत्वाद | नित्यत्वाद् । | ,, | २० |
| वरिव- | अवरिव- | १३३ | ३ |
| म . न्तं | महान्तं | ,, | १५ |

| अशुद्धम्. | शुद्धम्. | पृष्ठे. | पङ्क्तौ. |
|---|---|---|---|
| सपश्रोष्ट | समश्रोष्ट | १३८ | १६ |
| उपक्रं ीष्ट | उपक्रंसीष्ट | १३८ | २१ |
| 'नो लोपः' | 'लोपस्त्वनुदात्त०' | १३९ | १६ |
| उपायसि । | उपायंसि । | " | १७ |
| त्रिषष्टौः । | त्रिषष्टौ । | " | १८ |
| ञ्यन्तत्वं | ञ्यन्तत्वे- | १४१ | १० |
| -देकवचन, | -देकवचनम्, | १४३ | ९ |
| सि-स-ता- | सि-ता- | १४४ | ४ |
| 'सि-म्योः' | 'सि-स्योः' | १४७ | १६ |
| मुजगः मुजङ्गः । | भुजगः भुजङ्गः । | १५४ | ८ |
| परतपः । | परंतपः । | १५६ | ११ |
| प्रययो | प्रत्ययो | १६९ | १८ |
| नामकमिदं | नामकं | १८३ | १९ |
| —भूतः क्रियान्तरः । | —भूतक्रियान्तरः । | १८८ | १३ |
| अगनरिद् | अग्नेरिद् | १९१ | १८ |



॥ अर्हम् ॥

# श्रीयशोविजयजी जैनग्रन्थमालासे उपलब्ध संस्कृत-प्राकृत ग्रन्थोंकी

# सूची



## 'भारते भातु भारती'

## न्याय

१ **रत्नाकरावतारिका**—( दुष्प्राप्य )बारहवीं शताब्दी के तार्किक पूज्य श्रीवादिदेवसूरि के **प्रमाणनयतत्त्वालोकालङ्कार** के ऊपर यह, उन्ही के विद्वान् शिष्य श्रीरत्नप्रभसूरि की बनाई हुई, स्याद्वादरत्नाकर के सारांश रूप सुन्दर और प्रौढ टीका है। इसकी भाषा बहुत छटादार और आलङ्कारिक है, इसीलिये यह न्याय की कादम्बरी या तिलकमञ्जरी कही जाती है। "भट्टचट्टघट्टना।" जैसे इसके अनेक वाक्य कई विद्वानों के जिह्वाग्र हैं। कलकत्ता युनिवर्सिटीने इसे जैनन्यायतीर्थ में दाखिल किया है। डेमी अष्ट पेजी साइज के २७२ पृष्ट और सुन्दर प्रस्तावना सहित मूल्य रु. १–०–०.

२ रत्नाकरावतारिका, टिप्पणपञ्जिका सहित (दो परिच्छेद) —उसी रत्नप्रभसूरि की रत्नाकरावतारिका के ऊपर पं० ज्ञानचंद्रजी और श्रीराजशेखरसूरि का टिप्पण और पंजिका संक्षेप से है। सुपर रॉयल पेजी साइज़ क पृष्ठ १३६ छपाई और कागज़ सुन्दर हैं । मूल्य १—०—०.

३ सम्मतितर्क—आदिविक्रम की पण्डितसभा के एक रत्न श्रीसिद्धसेनदिवाकरसूरि की प्रौढ तार्किक लेखिनी से यह लिखा हुआ ग्रन्थ जैनन्याय में प्रथम और उच्च स्थान को प्राप्त कर चूका है। इसी के ऊपर तर्कपञ्चानन श्रीअभयदेवसूरि की तत्त्वावबोधिनी नामकी प्रौढतम टीका है जिसका यह प्रथम भाग है। सुपररॉयल ८ पेजी साइज़ के पृष्ठ २००, कागज़ और छपाई सुन्दर। मूल्य मात्र रु. १—०—०.

४ षड्दर्शनसमुच्चय ( मूल ) मलधारिश्रीराजशेखरसूरि-कृत यह श्लोकबद्ध मूल ग्रन्थ भी दार्शनिक विद्वानों को अच्छा उपयोगी है। मूल्य ०—४—०.

५ जैनतर्कवार्त्तिक—आदिजैनतार्किक श्रीसिद्धसेनदिवा-कराचार्यजी के न्यायावतारादि प्रमाणविषयक श्लोकों के ऊपर श्रीमान् शान्त्याचार्यजीने विस्तृत वार्तिक रूप में इस ग्रन्थ को बनाया है। पृ० १६३ मूल्य रु. २—०—०.

६ **प्रमाणनयतत्त्वालोकालंकार**—वादीन्द्र श्रीवादिदेवसूरिने इस महाग्रन्थ को सूत्रात्मक आठ परिच्छेदों में बनाया है। इसकी गंभीरता इतनी है कि इसके ऊपर उन्ही **वादिदेवसूरिजीने** स्वयं ८४००० श्लोकात्मक **स्याद्वादरत्नाकर** नामकी बडी टीका लिख कर जगत् को चमत्कृत कर दिया है। आचार्यधुर्य श्रीविजयधर्मसूरीश्वर महाराज के प्रयत्न से कलकत्ता की अंग्रेज़ी की M. A. परीक्षा में और श्वे० न्यायकी संस्कृत प्रथमा परीक्षा में यह मूल ग्रन्थ दाखल हुआ है। प्रथम आवृत्ति खतम होने से संस्कृत टिप्पण सहित हमारे यहां पुनः छपता है।

---

## व्याकरण

७ **क्रियारत्नसमुच्चय**—षड्दर्शनसमुच्चय की बृहद् वृत्ति के लेखक न्यायव्याकरणविशारद श्रीगुणरत्नसूरिने इस ग्रन्थ को बनाया है। यह ग्रन्थ वस्तुतः व्याकरणाभ्यासी छात्र और विद्वानों के लिये बहुत ही उपयोगी है। सभी गण और सभी णिगन्त-सान्तादि-प्रक्रिया व कृदन्त के प्रयोगों में कौन २ धातु के कैसे २ रूप होते हैं वे इसमें हैमसूत्रों के निर्देशपूर्वक सिद्ध किये हैं। नामधातु और सौत्रधातु भी इसमें दिये गये हैं। धातुओं की अनुक्रमणिका और सुन्दर प्रस्तावनादि से

अलंकृत यह ग्रन्थ प्रत्येक वैयाकरण को तो अवश्य रखना ही चाहिये । सुपर रोयल ८ पेजी साइज़ के मोटे कागज़ के पृष्ठ ३१३, मूल्य फक्त रु. २—०—०.

८ कविकल्पद्रुम—यह व्याकरणोपयोगी ग्रन्थ श्रीहर्षकुल-प्रणीत है । व्याकरणानुसार इसमें धातुओं को श्लोक-बद्ध कर दिये हैं । धातुपाठ कण्ठस्थ करनेवाले विद्या-र्थिओं को तो यह खास उपयुक्त है । और भी व्या-करणोपयोगी कई बातें इसमें हैं । मूल्य ०—४—०.

९ सिद्धान्तरत्निकाव्याकरण—( सटिप्पण ) सारस्वत-चन्द्रिका की पद्धति का, यह छोटा और उपयोगी व्याकरण श्रीजिनचंद्रसूरि महाराजने बनाया है । संक्षेप से संस्कृत भाषा का ज्ञान प्राप्त करनेवालों के लिये तो यह खास उपयुक्त है । उपलब्ध प्राचीन व्याकरणों में यह प्रायः सब से छोटा व्याकरण है । इसमें वाक्यप्रकाशादि से उद्धृत कर के व्याकरणोपयोगी करीब ६० श्लोकों का संग्रह भी दिया है । कलकत्ता की श्वे० जैनव्याकरण की प्रथमा परीक्षा का यह ग्रंथ है । पृ० २४०, मूल्य ०—१२—०.

१० सिद्धहैमशब्दानुशासन मूल ( व्याकरण )—प्रसिद्ध वैयाकरण पञ्चानुशासनविधाता श्रीहेमचन्द्राचार्य के संस्कृत

व्याकरण के मूलसूत्र इसमें अलग छपवाएँ हैं। हैमव्याकरणपाठी विद्यार्थिओं को मूलसूत्र की आवृत्ति करने के लिये तो यह नितान्त उपयुक्त है। अन्य वैयाकरणों को श्रीहेमाचार्य की विशिष्ट विशारदता जानने के लिये काम की चीज है. मूल्य ०–६–०.

११ **स्यादिशब्दसमुच्चय** ( सटीक )—बालभारतादि ग्रन्थों के निर्माता महाकवि श्री**अमरचंद्रसूरि** का, स्यादिनामों के विषय का यह बहुत ही बढिया ग्रन्थ है। पं० **लालचन्द्र भगवानदासने** इसको एडिट किया है। मूल्य रु ०-१२-०

१२ **श्रीसिद्धहेमसूत्रपाठ** की **अकाराद्यनुक्रमणिका**—प्रसिद्ध वैयाकरण श्री**हेमचन्द्राचार्य** के व्याकरण के अकारादिक्रम से इसमें सूत्र हैं। ०-४-०

१३ **धर्मदीपिका**—आचार्य श्री**हेमचन्द्रसूरि**जी के **सिद्धहेम** सूत्रोंके ऊपर न्यायविशारद न्यायतीर्थ उ० श्री**मंगलविजय**जी महाराजकृत यह सुगम वृत्ति है, परंतु इसमें यह विशेषता है कि अष्टाध्यायी क्रमसे सूत्र नहीं रख कर सिद्धान्त कौमुदी की पद्धति का यह व्याकरण है। सूत्रानुक्रमणिका, धातुपाठ, संग्रहश्लोक और परिभाषा प्रकरणादि से अलंकृत यह ग्रन्थ वैयाकरणों को उपयुक्त है। ५०० से अधिक पृष्ठ के इस ग्रन्थ का मूल्य २–०–०

# काव्य और चरित्र

१४ श्रीनेमिनाथमहाकाव्य (पद्यबद्ध-सटिप्पण)— काव्य के प्राथमिक अभ्यासियों के लिये यह ग्रन्थ बहुत ही उपयोगी है। तुलना की दृष्टि से कहें तो रघुवंश की शैली का, बल्की कोई २ जगह उससे भी अच्छा है। इसमें प्रभात और राजीमती के विरह प्रभृति का वर्णन बहुत ही अच्छा करके श्रीकीर्त्तिराजोपाध्यायजीने कालिदास की कीर्ति के साथ स्पर्द्धा की है। भिन्न २ छन्दः, अलङ्कार और भावों से पूर्ण द्वादश सर्गात्मक यह ग्रन्थ पुस्तकाकार और पत्राकार में छपा है। दोनों में से प्रत्येक का मूल्य ०-१२-०

१५ श्रीशान्तिनाथचरित्र (श्लोकबद्ध महाकाव्य)—काव्यनिष्णात श्रीमुनिभद्रसूरि महाराजने इस अत्युत्तम ग्रन्थ को बनाकर कवि समाज को चमत्कृत कर दिया है। इसमें इन्द्रवज्रा, वसन्ततिलका, शिखरिणी प्रभृति बड़े बड़े छन्दों में १९ सर्ग हैं। सारे ग्रन्थ में अलंकार की छटा एवं वर्णन का चमत्कार है। हमारी दृष्टि से माघकाव्य की कोटी का यह काव्य है, इसमें करीब ५००० श्लोक हैं. भाषा वैदर्भि रीति की है. काव्यज्ञों को यह संग्रहणीय है. पृष्ठ २५५, मूल्य रु. ३-०-०

१६ श्रीपार्श्वनाथचरित्र (श्लोकबद्ध)—इस ग्रन्थ के निर्माता श्रीभावदेवसूरि हैं, इसमें श्रीपार्श्वनाथजी का चरित्र विस्तार से दिया है। अनुष्टुप् छन्दः में श्लोक होने से साधारणों के लिये यह उपयुक्त प्रतीत होता है इसमें करीब ६६०० श्लोक हैं। कागज़ और छपाई सुन्दर पृष्ठ ४७८ सजिल्द पुस्तकाकार और पत्राकार प्रत्येक का मूल्य रु २—०—०

१७ श्रीमल्लिनाथ चरित्र (श्लोकबद्ध)—श्रीविनयचन्द्रसूरिकृत यह भी अनुष्टुप् छन्दः में है छपाई और कागज़ मनोहर है पृष्ठ ३३६ पुस्तकाकार और पत्राकार, प्रत्येक का मूल्य रु. २—०—०

१८ शीलदूत—महाकवि कालिदास के मेघदूत काव्य के प्रत्येक श्लोक के अन्तिम चरण लेकर इसमें श्रीचारित्रसुन्दर गणिने पादपूर्त्ति की है, यानी तीन पाद अपने और "स्निग्धच्छायातरुषु वसति" प्रभृति एक पाद मेघदूत के श्लोकों का लेकर उसका अर्थ इस काव्य के नायक श्रीस्थूलभद्रजी में घटाया है। सारा काव्य बहुत रसपूर्ण है। इस खण्ड काव्य को कौन न खरीदेगा ? मूल्य मात्र रु ०—४—०

१९ जगद्गुरुकाव्य—सम्राट् अकबर को प्रतिबोध करनेवाले जगद्गुरु श्रीहीरविजयसूरि के जीवनके विषय का यह ग्रन्थ

शार्दूलविक्रीडितादि बड़े बड़े छंदो में लिखा गया है। श्रीहीरविजयसूरीश्वर के समय का इतिहास जाननेवालों को और काव्यज्ञों के लिये खास उपयोगी ग्रन्थ है। मूल्य रु. ०—४—०

२० **गुरुगुणरत्नाकरकाव्य**—श्रीरत्नशेखरसूरि के पट्टधर श्रीलक्ष्मीसागरसूरि के चरित्र विषय का यह काव्य श्रीसोमचारित्रगणिने रचा है। काव्य के ढंग का यह ग्रन्थ होते हुए भी इतिहासज्ञों को भी उपयुक्त है। पृष्ठ ७९, मूल्य ०—८—०

२१ **श्रीधर्ममहोदय**—नवयुगप्रवर्त्तक शास्त्रविशारद जैनाचार्य श्रीविजयधर्मसूरीश्वरमहाराज का पवित्रजीवनचरित्रात्मक यह ग्रन्थ उन्हीं के शिष्यरत्न स्वर्गीय श्रीरत्नविजयजी म० का बनाया हुआ है। काव्यपद्धति का अनेक छंदों में निबद्ध सरस और सुन्दर इस ग्रन्थ को कौन न पढ़ेगा? मूल्य ०—४—०

२२ **श्रीशालिभद्रचरित्र** ( पद्यबद्ध सटिप्पण )—परमात्मा महावीर के समय के ऐतिहासिक पात्र श्रीशालिभद्रजी का जीवनचरित्र इस काव्य का विषय है। पं० श्रीधर्मकुमारजीने अपनी प्रौढ़ भाषा और कल्पना से इसको बनाकर अपनी विद्वत्ता का परिचय दिया है। इसलिये कठिन स्थलों में हमने टिप्पण करवाकर पत्राकार में छपवाया है। पृ० १९२, मूल्य रु. २—०—०

२३ **श्रीपृथ्वीचंद्रचरित्र**–( पत्राकार श्लोकबद्ध )–**श्रीसत्यराज** गणि विरचित इस छोटे से चरित्र में वैराग्योद्बोधक वर्णन अच्छा आता है। उपमा आदि अलंकारों से युक्त यह ग्रन्थ विद्यार्थिओं को अवलोकनीय है। न्यायविशारद न्यायतीर्थ उ० श्री**मंगलविजय**जी महाराजने इसको एडिट किया है। पत्राकार. मूल्य २–०–०.

२४ **पर्वकथा संग्रह**—ज्ञानपञ्चमी वगैरः धार्मिक पर्वों के विषय की ९ कथाएँ इसमें हैं। पत्राकार, पृष्ठ ३०, मूल्य ०–६–०.

२५ **उपदेशतरङ्गिणी**—व्याख्यान के योग्य यह बहुत उपयोगी है। भिन्न २ विषय का समर्थन करने के लिये प्राचीन धार्मिक कथा–दृष्टान्तादि देकर **श्रीरत्नमन्दिरगणि**ने इस ग्रन्थ को अच्छा उपयुक्त बनाया है। पत्राकार, पृष्ठ २८० मूल्य ३–०–०.

२६ **रत्नचूडकथा** ( पत्राकार में )—श्री**ज्ञानसागरसूरि**जीने इसमें पद्यबद्ध **रत्नचूड़** का चरित्र चित्रित किया है। पत्राकार, मूल्य ०–८–०.

२७ **भरटकद्वात्रिंशिका**—जैनसाहित्यसेवी जर्मनी के प्रसिद्ध प्रो० **हरटल**ने इस द्वात्रिंशिका को अंग्रेज़ी में एडिट करके लिपूज़िग (जरमनी) से अंग्रेज़ी नोटों सहित प्रकट की है। मूल्य ३–०–०.

२८ **पंचाख्यानवार्तिक**—जर्मनी में छपा हुआ है। मूल्य रु. ३-१२-०

२९ **शृङ्गारवैराग्यतरंगिणी**—इसके श्लोकों में स्त्रीके मुख-केशादि का वर्णन कर उसको वैराग्य में घटाया है। पं० शिवदत्त कविरत्नने इसके बहुत वाक्य लेकर अलग श्लोक बनाये हैं। भेट

---

## कोष

३० **सटीक अभिधानचिन्तामणि** ( हैमकोष )—व्याकरण-न्याय-कोषादि सैंकडों ग्रन्थोंके रचयिता श्रीमान् **हेमचन्द्रा-चाय** का बनाया हुआ यह कोष जगद्भर में विख्यात है। **रघुवंशादि** पांच काव्यों की, **सिद्धान्तकौमुदी, काव्य-प्रकाश, कादम्बरी** प्रभृति सैंकडों व्याकरणादि ग्रन्थों की टीकाओंमें इस कोष के कई **प्रमाण 'इति हैम'** नाम से आते हैं। **अमरकोष, मेदिनी** प्रभृतिकोषों में जो शब्द नहीं मिलते वे इसमें मिल सक्ते हैं। यह कोष की उन्हीं **हेमचन्द्राचार्य** की बनाई हुई **व्याकरण** के सूत्रोल्लेख पूर्वक स्वोपज्ञ सुंदर और सरल वृत्ति हमने पहिले पहल ही छपवाई है। कवि: वैयाकरण और संशोधको के लिए यह कोष बहुत कामका है, जल्दी मंगवाइये। पृ ६२० सजिल्द मूल्य ४-०-०

३१ **श्रीअभिधानचिन्तामणिकोष** ( दूसरा भाग )—उपर्युक्त कोष के शब्दों की यह अकारादि क्रम से अनुक्रमणिका है, इसकी प्रस्तावना में श्री हेमचन्द्राचार्य का थोडा परिचय भी दिया है। हैमकोष की किसी भी आवृत्ति के लिये यह अनुक्रमणिका काम आसकती है. पृष्ठ २९१ सजिल्द मू० ३-०-०

---

## नाटक।

३२ **मुद्रित कुमुदचन्द्रप्रकरण**—गुजरात के बारहवीं शताब्दी के सम्राट् **सिद्धराज जयसिंह** की राज्यसभा में प्रकाण्ड दिगम्बरवादि श्री **कुमुदचंद्राचार्य** को स्त्रीमुक्ति के शास्त्रार्थ में श्री वादीन्द्र **वादिदेवसूरिजी**ने हराये थे। उसी विषय और उसी प्रसंग को लेकर कवि **यशश्चन्द्र**ने यह प्रकरण ( नाटक का एक भेद ) बनाया है. इस में ऐतिहासिक पात्र बहुत हैं, भाषा अच्छी है। मूल्य ०-८-०

---

## छन्दः।

३३ **छन्दोऽनुशासन** ( सटीक )—श्री **हेमचन्द्राचार्य**कृत यह ग्रन्थ सूत्रबद्ध कविता प्रिय पंडितों को बहुत उपयोगी है इसके आठ अध्याय सूत्रबद्ध हैं। उन्हीं आचार्यवर्यने इसके

ऊपर स्वोपज्ञ विस्तृत टीका बनाई है, वह बहुत ही उपयोगी है। डॉ० याकोबी का मत है कि पिङ्गलकृत पिङ्गल सूत्र से इस में कुछ छन्दः ज्यादा हैं और लेखन-शैली सुन्दर एवं सरल है। पत्राकार इस ग्रन्थ का मूल्य रु. १—०—०

---

## इतिहास।

३४ **गुर्वावली**—कालिदासतुल्य, सहस्रावधानी श्रीमुनिसुन्दरसूरि महाराजने भगवान् महावीर के बाद होनेवाले अनेक गणधर आचार्यों की सत्ता—समयादि पूर्वक पट्टावली (परंपरा), अपने समय यानी पन्द्रहवीं शताब्दी तक का वृत्तान्त इतिहास और काव्य दोनों दृष्टि से, लिखी है। प्रथमावृत्ति खतम होने से हमने इसकी दूसरी आवृत्ति छपवाई है। इतिहासज्ञों को तो यह बहुत ही काम की चीज़ है। पृष्ठ ९४, मूल्य ०—४—०

---

## स्तोत्र।

३५ **श्रीजैनस्तोत्रसंग्रह** (द्वितीय भाग)—इस भाग में भक्तामर कल्याणमन्दिर स्नातस्याप्रतिमस्य—संसारदावादि की पादपूर्तिवाले, यमकादि विचित्रालंकारवाले, भक्ष्य चीज के

नामवाले, अनेक विचित्रस्तोत्रों का संग्रह किया है। संस्कृतज्ञभक्त लोगों के लिये बहुत अच्छी वस्तु है। यह दूसरी आवृत्ति है। पृष्ठ १३६, मूल्य ०—१२—०

---

## प्राकृत।

३६ **प्राकृतमार्गोपदेशिका**—प्राकृत भाषा का अभ्यास करने वालों के लिये पाठमाला की पद्धति से श्रीहेमचन्द्राचार्य के प्राकृतव्याकरण के नियमानुकूल यह पुस्तक खास तैयार की गई है। इसके अन्दर सभी प्राकृत के नियम गुजराती में समझाये गये हैं, इसके पढने से प्राकृत साहित्य में प्रवेश हो सकता है। इसके पीछे गुजराती अर्थ सहित छोटासा प्राकृत कोष भी दिया गया है। पृष्ठ १८९, मूल्य १—४—०

३७ **विवेकमञ्जरीसटीक** (भाग १)—प्राकृत भाषा का यह ग्रन्थ कविसभाशृंगार श्रावक आसड कवि का बनाया हुआ है। इसके ऊपर वसन्तविलास ग्रन्थकार श्री बालचन्द्रसूरिजीने संस्कृत व्याख्या लिखी है। इसमें टीकाकारने अनेक धार्मिक दृष्टान्त देकर मूलकर्त्ता के आशय का अच्छीतरह स्पष्टीकरण किया गया है। न्या०तीर्थ पं० हरगोविंददास की प्रस्तावना भी इसमें पढने योग्य है। मूल्य रु० २—०—०

## आगम और तत्त्वज्ञान ।

३८ श्रीउत्तराध्ययनसूत्र भाग १—श्रीकमलसंयमोपाध्याय की बनाई हुई सर्वार्थसिद्धि नाम की टीका युक्त तो यह ग्रन्थ सर्व प्रथम ही हमारे यहां से प्रकाशित होता है। इस सूत्र और टीका में कई सुन्दर २ कथाएँ आती हैं, अच्छे कागज़ों मे छपा है। शान्तमूर्त्ति मुनि श्रीजयन्तविजयजी महाराजने इसको सपरिश्रम एडिट किया है। पत्राकार में मूल्य रु० ३–८–०

३९ श्रीउत्तराध्ययनसूत्र भाग २ ,, ,, मूल्य ३–८–०

४० ,, ,, भाग ३ ,, ,, ,, ३–८–०

४१ ,, ,, भाग ४ (छप रहा है) इस भाग में यह पूर्ण होगा.

४२ विशेषावश्यकभाष्य (सटीक) पत्राकार—श्रीजिनभद्रगणि महाराज़ने आगम पद्धति से इस महाग्रन्थ को मूल प्राकृत में बनाया है। इस में आगमज्ञों और तार्किकों को बहुत आनन्द देने योग्य अनेक विषयों की चर्चा है। ज्ञान के विषय में इस ग्रन्थ से बहुत विस्तारपूर्वक जानने को मिलता हैं। इसके ऊपर प्रसिद्ध टीकाकार मलधारि श्रीहेमचन्द्रने बहुत ही विस्तृत और अत्युत्तम संस्कृत टीका बनाई है। पत्राकार पृष्ट १६२३, मूल्य ५०–०–० सिर्फ थोडी ही नकले सिलिक में हैं.

४३ **जैनतत्त्वप्रदीप**—न्यायतीर्थ–न्यायवि० उपाध्यायजी श्री मङ्गलविजयजी म० की तत्त्वज्ञान विषयक यह संस्कृत कृति न्यायाभ्यासी विद्यार्थियों को अत्युपयोगी है। मूल्य रु. १)

४४ **जैनतत्त्वज्ञान**—प्रसिद्ध नामधेय श्रीविजयधर्मसूरि महाराजजीने इस लघु ग्रन्थ म जीवादि पदार्थों का सरल संस्कृत में विवेचन किया है । भेंट.

४५ **त्रैविद्यगोष्ठी**— विद्वद्गोष्ठी ( वार्त्तालाप ) कैसे करना ? यह बात इस ग्रन्थ से जानने में आती है । साहित्य सम्बन्धी, व्याकरण सम्बन्धी, और न्याय सम्बन्धी गोष्ठीका विस्तार से उल्लेख है । षट् दर्शन सम्बन्धी बात संक्षेप से जाननेवालों के लिये यह छोटा ग्रन्थ अवश्य मंगवाना चाहिये। मूल्य ०-८-०

४६ **पर्युषणाऽष्टाह्निकाव्याख्यान**–(अट्ठाइ व्याख्यान, श्लोकबद्ध) भेंट.

---

## हिन्दी ग्रन्थों.

४७ सूरीश्वर और सम्राट् ... ... ... ४-८-०
४८ जैनतत्त्वदिग्दर्शन ... ... ... ०-३-०
४९ जैनशिक्षादिग्दर्शन ... ... ... ०-३-०
५० पुरुषार्थदिग्दर्शन... ... ... ... ०-४-०
५१ आत्मोन्नति दिग्दर्शन ... ... ... ०-४-०
५२ धर्मदेशना ... ... ... ... २-८-०
५३ तेरापंथ-मतसमीक्षा ... ... ... ०-४-०
५४ तेरापंथी-हितशिक्षा ... ... ... ०-६-०

५५ शिक्षाशतक ( कविता ) ... ... ... ०-१-०
५६ विवेकविलास ... ... ... ... २-०-०
५७ गौतमपृच्छा ... ... ... ... ०-१२-०
५८ धर्मशिक्षा ... ... ... ... १-०-०
५९ जैनरामायण ... ... ... ... ४-०-०
६० बाळ नाटको ... ... ... ... भेट
६१ मेघमहोदय ( वर्ष प्रबोध )... ... ... ४-०-०
६२ विजयप्रशस्तिसार ... ... ... ०-६-०
६३ जैनधर्मप्रकाश स्तवनावली ... ... ०-२-०
६४ आदर्श-साधु ... ... ... ... १-४-०
६५ ब्रह्मचर्यदिग्दर्शन... ... ... ... ०-८-०
६६ गंगाधरजी के असत्य आक्षेपों के उत्तर ... ०-१-०
६७ अहिंसादिग्दर्शन... ... ... ... ०-८-०
६८ सुजनसंमेलन ... ... ... ... ०-१-०

---

## गुजराती ग्रन्थ.

६९ सूरीश्वर अने सम्राट् ... ... ... ३-८-०
७० जैनशिक्षा दिग्दर्शन ... ... ... ०-२-०
७१ प्राचीन श्वेताम्बर-अर्वाचीन दिगम्बर ... ०-२-०
७२ विजयधर्मसूरि-जीवन ... ... ... ०-४-०
७३ ऐतिहासिक राससंग्रह भाग १ ला ... भेट
७४ ,, ,, भाग २ रा ... ०-१०-०
७५ ,, ,, भाग ३ रा ... २-०-०
७६ ,, ,, भाग ४ था ... २-८-०
७७ प्राचीन तीर्थमाला संग्रह भाग १ ... ... २-८-०

